THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

Nos. 50.

---

THE

# MĀTRIKĀ CHAKRA VIVEKA

GOVERNMENT SANSKRIT LIBRARY,

BENARES.



---

Price, Rs.2]

Saleable at half of the printed price.

THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS

*No. 50*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA, M. A.

THE

# MĀTRIKĀ CHAKRA VIVEKA

*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*

1934

* श्रीः *

# मातृकाचक्रविवेकः

श्री स्वतन्त्रानन्दनाथ विरचितः

सव्याख्यः ।

व्याकरणाचार्य पण्डित डबरालोपाह्व ललिताप्रसादेन
भूमिका-शुद्धिपत्रादिभिर्विभूष्य संशोधितः ।

THE

# MATRIKA CHAKRA VIVEKA

By

SVATANTRĀNANDA NĀTHA

*Edited with Introduction etc.*

by

VYAKARANACHARYA
PANDIT LALITA PRASADA DABRAL,
Goenka Scholar, Government Sanskrit College,
BENARES.

1934.

# FOREWORD.

A general and systematised study of Tantrik mysticism and the profound philosophy associated with it has not yet been made, beyond what Sir John Woodroffe (alias Arthur Avalon) has attempted in his learned treatises as well as in his illuminating Introductions to the S'ākta works published in the Tantrik Texts Series. But a study of this nature is absolutely essential to a proper appreciation of Tantrik Culture and of its relation to Indian Culture as a whole.

The philosophy of S'ākta Tantra, especially of the Tripurā School, is embodied in works like the Tripurā Rahasya, Yoginīhṛidaya, etc., but the philosophy of Tantrik symbology and the secrets of the Mātṛikās do not find there a methodical exposition. And without these it is hardly possible to rationalise the process of the origin of the Chakras, of the Mantras, of the Devatās and in fact of any of the important factors which constitute the greatness of Tantrik Sādhana.

Looked at from this point of view, the Mātrikā Chakra Viveka of Svatantrānanda Nātha, the work herewith presented to the public with an old commentary, is one of unique importance. Some years ago a manuscript of the book came in my possession in quite an accidental manner. When the work was carefully read—and it was not an easy affair in view of the errors of the scribe and of the peculiarly

technical character of the text—it appeared to me that it represented the views of a great School of Tantrik Sādhana hitherto little known to the world of scholarship and embodies the deepest spiritual experiences of its votaries expounded in a terse and graceful style. The publication of the work was at once undertaken, but on account of the extremely difficult nature of the task the progress was necessarily slow. To Pandit Lalita Prasad Dabral, the present editor of the work, belongs the real credit of carefully handling the text and trying to bring it out in as correct a form as possible. The learned editor in his short but illuminating Introduction has dealt with a few salient points relating to the contents of the work.*

I am confident therefore that in spite of the great limitations incidental to its nature, the work, even as it is, will be appreciated as a masterly and brilliant treatise and that it will secure a cordial welcome at the hands of scholars interested in the subject.

Govt. Sanskrit College, BENARES. } GOPI NATH KAVIRAJ

---

* But within the compass of a short Introduction, he has scarcely been able to do more than the barest justice to the whole work. I propose therefore to lay before the public shortly, in the shape of a Monograph, the results of an extensive and systematic study of the unique philosophy represented in this treatise, a study carried on under my direct guidance and in pursuance of my specific instructions by the editor of the text and by Pandit Vīramaṇi Upādhyāya, M. A., as Goenka Scholars of the Government Sanskrit College, Benares.

॥ प्रणमामि जगत्प्रसूम् ॥

# भूमिका



स्वरसप्रवहणशीला प्रकृतिरियम् यत्सर्वोऽपि त्रिलोकीचेतनवर्ग आदेवमाकीटञ्चाऽनन्दापराभिधं सुखमेव पुरुषार्थं मन्वानस्तत्साधनेषु सर्वतोभावेन सततं प्रवर्तमान आस्ते । यच्चैहिकम्—स्रग्वनिताऽऽदिजं सुखं तत् क्षयि सातिशयञ्च, यच्चाऽऽमुष्मिकं वैदिकं सोमयागादिजन्यं स्वर्गादि तदपि समानमेव, तदुक्तम् "यथेह कर्मचितो लोकः क्षीयते तथाऽमुत्र पुण्यचितोऽपी"ति । अतो निरतिशयसुखमेव परमपुरुषार्थपदवीमारोहति, तच्चाऽऽगमैकप्रतिपाद्यज्ञानजन्याऽज्ञाननिवृत्तिहेतुकमपि कृत्स्नस्यापि द्वैताऽद्वैतमिश्ररूपत्रिविधस्यापि संसारजातस्याऽधिष्ठातुर्ब्रह्माऽऽत्मकपरमशिवस्य प्राणशक्त्यात्मनः श्रीमन्महात्रिपुरसुन्दर्याः सायुज्यमन्तरा नैवाऽऽस्वादयितुं शक्यते । तदुक्तमभियुक्तैः "सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ । तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः" इति । अयमेवाऽर्थो भगवत्पादैः श्रीशङ्कराचार्यैरपि सौन्दर्यलहर्याम्—"परानन्दाभिख्यं रसयति रसं त्वद्भजनवान्" इति प्रकटीकृतः । सायुज्यं नाम तदात्मकता, साम्प्रदायिकानां शिवशक्तिसम्पुटान्तर्भावात्मकतेति व्यपदिष्टम् । सैवाऽऽत्यन्तिकी मुक्तिरिति तदाप्तये श्रीदेव्याः स्वरूपपरिज्ञानमतीवाऽपेक्षितम् । त्रिपुरातापिन्युपनिषत्कौलोपनिषदादीनां तन्त्रागमानां वेदशिरोभागापराभिधानामिदम्पर्येणैव तत्तदुपासनानिरूपणे तात्पर्यम् । वामकेश्वरादितन्त्रग्रन्थेष्वप्रतिपादितदिशोपासनाद्यायासनिरपेक्षं श्रीत्रिपुरेश्वर्याः स्वरूपविवेकार्थं श्रीस्वतन्त्रानन्दनाथः सार्थकाभिधमिमं मातृकाचक्रविवेकं जग्रन्थ ।

टीकाकृता श्रीसदानन्द मुनिना प्रथमखण्डान्ते "इतिश्री-मातृकाचक्रविवेके" इत्यस्य व्याख्यानाऽवसरे "मातृकाशब्दस्य तन्त्रेण द्विरुक्तिरवगन्तव्या, तेन मातृका च मातृकाचक्रश्चेति लभ्यते, तयोर्विवेकोऽत्रेति विग्रहः। मातृका मन्त्रः, मातृकायाश्चक्रं मातृकाचक्रं, मातृकावर्णसन्निवेशेन सम्भूतं चक्रम्, मातृकैव चक्राकारेण सन्निविष्टेति भावः" इत्यादिरीत्या मातृकाचक्रविवेकपदस्य व्युत्पत्तिप्रदर्शनपूर्वकमर्थो वर्णितः। तथाहि—मातृकापदेन वर्णात्मको मूलमन्त्रः मातृकाचक्रपदेन च नवचक्रात्मकं साम्प्रदायिकैः श्रीचक्रमिति संज्ञितं चक्रं गृह्यते। तदुक्तम्—"श्रीचक्रमूलमनुसंस्थिति दर्शनेन" (मा० च० वि० १।२१ सू०) इति। "श्रीचक्रं नवत्रिकोणश्लेषविशिष्टं यन्त्रम्, मूलमनुर्मातृका" इति च तद्व्याख्यातारः। अत्र प्रथममुद्दिष्टं श्रीचक्रं संक्षेपतो निरूप्यते—

अस्मिन् ग्रन्थे यन्त्रोद्धारस्याऽदर्शनेन "परमतमप्रतिषिद्धमनुमतं भवति" इति रीत्याऽन्यत्रोद्धृतमेव श्रीचक्रं ग्राह्यम्। अतो बहुष्वपि तदुद्धारप्रकारेष्वेतद्ग्रन्थगृहीतरीत्यैवोद्धारप्रकारः प्रदर्श्यते—

"विन्दुत्रिकोणसंयुक्तं वसुकोणसमन्वितम्। दशकोणद्वयोपेतं भुवनाऽरसमन्वितम्॥ दलाष्टकमलोपेतं दलषोडशकान्वितम्। त्रिवृत्तं भूपुरयुतं सोमसूर्याग्निरूपिणम्" इति। श्रीमद्भगवत्पादैः श्रीशङ्कराचार्यैश्च

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि<br>
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः।<br>
चुतश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-<br>
त्रिरेखाभिः सार्द्धं तव शरणकोणाः परिणताः॥ (सौ० ल० ६)

श्लोके उक्तम्। तथाच यामले "विन्दुत्रिकोण वसुकोण दशार-

युग्ममन्वस्रनागदलसंयुतषोडशारम् । वृत्तत्रयं च धरणीसदनत्रयञ्च श्रीचक्रराजमुदितं परदेवतायाः” इति ॥

मातृकारूपमूलमन्त्रश्चाऽत्र सम्प्रदायमते लकारद्वयत्तकारसहिताऽकारादिक्षकारान्त एकपञ्चाशद्वर्णात्मकः सौम्यसौराऽनलात्मभिस्त्रिखण्डः । तदुक्तं रुद्रयामले “त्रिखण्डं मातृका चक्रं सोमसूर्यानलात्मकमि”ति श्रीचक्रसाम्यमर्हति । अयमत्रार्थसङ्ग्रहः—मेयमितिमातृरूपस्य कृत्स्नस्य भेदाऽभेदतदुभयरूपस्य शिवशक्त्यात्मकस्य चिच्चैत्यरुपस्य जगतः प्रतिबिम्बभूतं श्रीमन्महात्रिपुरसुन्दर्याः शरीरं नवचक्रमयं श्रीचक्रम् । तदुक्तम् “शिवशक्तिमयं ज्ञेयं श्रीचक्रं शिवयोर्वपुः ।”

तत्र क्रियात्मकानि शाक्तानि पञ्चचक्राणि भेदात्मकचैत्यसंसारस्य प्रतिकृतयः ।

(१) प्रथमं तावत् महाबिन्दुचक्राधिष्ठानायाश्चिदचिद्सामरस्यमापन्नाया विमर्शशक्त्या एव वहिर्मुखायाः मूलभूताया महेच्छायाः परावाग्रूपिण्या गगनविश्रान्तेर्विन्दुरूपिण्या रश्मिरूपं मेयादित्रिपुटीरूपस्याऽन्योन्यकार्यकारणभावधर्मिधर्मभावमापन्नस्य भेदाऽभेदमिश्ररुपेण त्रिविधस्य जगतः प्रतिकृतिस्वरूपं त्रिकोणचक्रम् । तदेतच्चक्रं त्रिविधस्यापि जगतो मेयादिजाग्रदादीच्छादित्रिकवत्त्वमनुलोमविलोमक्रमेण परस्परं चिच्चैत्याक्रमणं वहिरन्तर्मुखतया जीवशिवभावञ्च व्यञ्जयति । महाशक्त्यवस्थानं महाविन्दुः । वहिर्मुखाया जीवात्मिकाया विमर्शशक्तेरवस्थानं त्रिकोणम् ।

(२) अपरम्—अष्टारबिम्बम् त्रिकोणबिम्बस्य रश्मिचक्रं चतुरस्रद्वयसम्मेलनेन सम्भूतम् । एकत्र चतुरस्रे मकारात्मकजीवबिम्बस्य रश्मिभूते कलाऽविद्यारागादिकञ्चुक तत्त्वानि, अपरत्र च हकारात्मकशिवबिम्बस्य रश्मिभूते शुद्धविद्यादितत्त्वचतुष्टयमिति मिलित्वाऽष्टौ तत्त्वानि अष्टाराधिष्ठितानि । एतच्चक्रं प्रमातृपुरं, स्वप्नपदं, आग्नेयखण्डश्चोच्यते ।

( ३ ) तृतीयमन्तर्दशारम् । ( ४ ) चतुर्थं-बहिर्दशारम् । अनयोः ज्ञानकर्मेन्द्रियाणि दश ज्ञेयवेद्या विषयाश्च दशेति मिलित्वा विंशतितत्त्वानामवस्थितिः । दशारद्वयमेकं चक्रं प्रमाणपुरं, जाग्रत्पदं, सौरखण्डम् ।

कलादिनियत्यन्तकञ्चुकपञ्चकं षष्ठं मायातत्त्वं च, इत्थं मिलित्वा षट् त्रिंशत्तत्त्वानि समयसिद्धान्तसिद्धानि बोध्यानि । तानि चाग्रे स्फुटीभविष्यन्ति ।

( ५ ) पञ्चमम्-चतुर्दशारं प्रमेयपुरं, सुषुप्तिपदं, सौम्यखण्डम् । अत्र बिन्दुविसर्गकलानां मेलनात् षोडशकलाः सकलतन्त्रबीजभूताः प्रतिष्ठिताः सन्ति ।

अस्यैव शाक्तचक्रमण्डलस्यान्तर्गतानि चत्वारि शिवचक्राणि ।

तत्र प्रथमं चक्रं बहिर्मुखायाश्रितोऽवस्थाबोधकं बैन्दवं त्रिकोणम् अन्तर्मुखायास्तु विश्रमरूपत्वान्मेयादीनां जाग्रदादीनां च वैचित्र्याभावादेकरूपत्वेनाऽकोणात्मकबिन्द्ववस्थापरिचायकं वृत्तत्रयात्मकं बिन्दुरूपम् । अत एव "अविनाभावसम्बन्धस्तस्माद्बिन्दुत्रिकोणयोः" इति संगच्छते ।

द्वितीयं चतुरस्रम्—अष्टदल-षोडशदल-त्रिकोण-बिन्दुरूपचक्रचतुष्टयघटितैकैककोणं चक्रचतुष्टयाधिष्ठातृदेवताचतुष्टयाऽधिष्ठितं दशारद्वयगतम् । सौरखण्डात्मकम् ।

तृतीयं षोडशदलम्—तच्च चतुर्दशारचक्रमध्ये चतुर्दशसु कोणेषु अभ्यन्तरभागे विभावितानि चतुर्दशदलानि, दलविभावितवृत्ताकारदलं कर्णिकावृत्तरूपदलञ्चापरमित्युपपन्नं भवति ।

अत्र षोडशकलात्मको विसर्गरूपश्चन्द्रोऽधिष्ठाता ।

चतुर्थम् अष्टदलपद्मचक्रम्—पूर्वोक्तषोडशदलपद्मस्यैकैकदलव्यवहितदलाष्टकैः सम्भावितं, बिन्दुवर्गमयाऽनलात्मकम् अघोरप्रतिकृतिभूतम् इति ।

एतच्चक्रचतुष्टयं बिन्द्वादिचतुर्दशारान्तान्तर्गतमेव यथा प्रदर्शितस्थानस्थितं बोध्यम्। लेखने चतुर्दशारतो बाह्यकक्षायां सन्निवेशस्तु तादृशार्थाऽव्युत्पन्नशिष्यव्युत्पादनायैवेति १४२-१४३-१४४ पृष्ठेषु स्पष्टमेतत्। तदुक्तम्"त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च॥ बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्। चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात्"। इति

शिवशक्त्यात्मकत्रिकोणानामूर्द्धाधोमुखतया व्यवस्थाऽपि यन्त्रोद्धारप्रकारप्रदर्शनस्याऽभावात् स्पष्टं न दृश्यते। तथापि विसर्गबिन्द्वोरन्यतरव्याप्तिप्राधान्येन भेदाऽभेदाऽन्यतरसाम्राज्यद्वारा व्यवस्थितैवेयं व्यवस्था। तथाहि यदा विसर्गोन्मेषस्तदा कारणीभूतायाश्चित आवरणात्कार्य(भेद)विलासस्फुरणम्। इयमेव चितोऽन्तश्छन्नता शैवानां चिद्रूपाणां त्रिकोणानामधोमुखतया व्यज्यते, क्रियात्मिकायाः शक्तेर्विसर्गस्य वहिरुल्लासरूपभेदस्फुरणं च तच्चक्राणामूर्द्ध्वमुखतया व्यज्यते। सृष्टिक्रमेण लेखने क्रियात्मिकया शक्त्या ज्ञानात्मकस्य बिन्दोरावरणमिति शिवचक्राणाम् अधोमुखता सम्पद्यते, संहारक्रमेण लेखने बिन्दून्मेषे क्रियासंहारेण तस्या अन्तरन्तःकक्षायां (स्वस्वकारणे) लयप्रदर्शनाय शक्तिचक्राणामधोमुखता शिवचक्राणामूर्द्ध्वमुखता च।

इदानीं क्रमप्राप्तो मातृकामन्त्रविवेकः संक्षेपेणोद्घ्रियते। "मन्त्रोत्करस्य जननीं मनसा विशामः" इत्युक्तदिशा ऐहिकाऽऽमुष्मिकलौकिकस्य मन्त्रसमुदायस्य प्रसवित्री मातृकैव। मन्त्रा एव सकलब्रह्माण्डबीजभूताः। अयमाशयः—शुद्धनिर्विकल्पायाश्चित ईक्षणात्मिका प्रथमा विमर्शशक्तिः गगनविश्रान्तिरूपा परा वाक्। तदुक्तम्—"आत्मनः स्फुरणं पश्येद्यदा सा परमा कला। अम्बिकारूपमापन्ना परावाक् समुदीरिता"-इति (वा० तं० ६ प० ३६)। तन्त्रान्तरे "अनादिनिधनं ब्रह्म शब्दतत्त्वं प्रचक्षते, । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः" इति

स्तूयते। श्रूयते च "तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्" इति । तथा च "विश्रान्तमात्मात्मनि परादियवाचि सुप्तौ" इति (मा० च० वि० ३।१ । तस्याः परा वाचः प्रथमो विलासः अन्यत्र प्रदर्शितपराप-न्त्यादिकक्रमेण अकारः । तदुक्तम् "वन्दे तामहमक्षय्यामकाराक्षररू-पिणाम्" इति (वा० तं०) । अत्र विसर्गविन्द्वात्मकं सर्वं विश्वमन्तर्लीन-मस्मादेव च निःसृतं सत् बहिर्विलसति । तथा च श्रुतिः" "अकारो वै सर्वा वाक्" इति । स्मर्यते च "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः" इति । स एवाऽऽकारो ज्ञानक्रियाभेदेनाऽन्तर्मुखबहिर्मुखतया च विन्दुविसर्गरूपतां भजति । ततः ज्ञानेच्छादिरूपाणामीक्षणन्यायेन प्रादु-र्भावे इकारोकारऋकारऌकाराणां विलासाः अ इ उ-ऋ ऌ इति (जीव) विसर्गपदविषयकं सुप्त्याद्यवस्थात्रिकसम्भावितं त्रिकोणपञ्चकम् । अ-इ-ऋ-ऌ इति चतुरवयवस्य विन्दुपदस्य पूर्वोक्तावस्थाभि-श्चत्वारि त्रिकोणानि । समपदं तु अः इ-उ-ऋ-ऌ अं इति विसर्गा-दिविन्द्वन्तवर्णषट्करूपम् । इयमेव षडङ्गा 'शिवजीव'विन्दु-विसर्गसामरस्यरूपा महाविन्दुशक्तिः समपदा । शिवजीवपदं तु इच्छाज्ञानक्रियाप्रमाणादिक्रमेण चतुरङ्गम्, पञ्चाङ्गं च । पूर्वत्र पदे वि-न्दुव्याप्तौ विसर्गोन्मेषाभावेन विसर्गाकारस्याऽभाव उकारस्यापि ज्ञान-त्वेन अकारे लयाददर्शनम् इति अ इ ऋ ऌ वर्णचतुष्टयम् । उत्तरत्र तु विसर्गव्याप्तौ विन्दून्मेषस्याऽभावात् विन्द्वकारस्याऽभावः, अकारेका-रयोः क्रियात्वेनैकात्म्याऽभावाद् इकारस्यापि दर्शनेन अ-इ-उ ऋ ऌ इति पञ्चाङ्गतेति विषमपदद्वयस्यान्योन्यसंश्लेषात्पूर्वोक्ते वर्णषट्के सम-पदे नवत्रिकोणात्मक श्रीचक्रसम्पत्तिः । ततः प्रमेयप्रमातृरूप-द्विविधकद्वयासम्मिश्रणेन सन्ध्यक्षराणां प्रमाणरूपता, तत्र एकारो विसर्गप्रमातुरन्तःसंसारः (स्वप्नः) ऐकारस्तु बाह्यसंसारः (जाग्रत्) । ओकारो विन्दुप्रमातुरन्तःसंसारः (तुर्यस्वप्नः) औकारस्तु बाह्यसंसारः (तुर्यजाग्रत्) । तथाच विन्दुविसर्गौ च अजडजडप्रमातारौ ।

प्रमेयप्रमाणप्रमातृरूपेण कक्ष्यात्रयमित्यत्रापि स्वरखण्डेऽस्ति । तत्र प्रथमे दश ह्रस्वदीर्घस्वराः प्रमेयकक्ष्या, प्रमेयाणां जडत्वसाम्याच्चान्द्राः । मध्यानि सन्ध्यक्षराणि प्रमाणकक्ष्या, प्रमाणानाञ्च प्रमेयप्रमातृसम्मेलनात्मकत्वेन मध्यस्थता जडाजडत्वेन वह्निरूपता च । बिन्दुविसर्गौ प्रमातृकक्ष्या, जडाजडप्रकाशकत्वसारूप्यात्सौरौ । एतेनान्यत्र तन्त्रे परिभाषितानां नित्याद्यपराभिधानां चन्द्रकलास्वरूपाणां स्वराणामुपवर्णितं त्रैविध्यमुपगृहीतं भवति ।

एवम्भूतस्य स्वरखण्डस्य पूर्त्यभिव्यञ्जकविवृतप्रयत्नसाम्यात् विश्वबीजभूतकलाव्यञ्जकत्वम् । अ इ उ ऋ ऌ इति वर्णपञ्चकमीषत्संकुचितं सत् ईषत्संकोचरूपेषत्स्पृष्टप्रयत्नवन्तोऽन्तःस्थाः पञ्च महाभूतशक्तिसङ्कोचात्मकलादिकञ्चुकानां प्रकृत्यादिवर्गसंकोचाकाशादीनां च बोधकाः । तदेव स्वरवर्णपञ्चकं पूर्णतया संकुचितं सत् कुचु टुतुपु इति संकोचद्योतकस्पर्शप्रयत्नवद्वर्गपञ्चकतां क्रमेणाऽवगाहते । तद्वर्गपञ्चकं च ज्ञानेन्द्रियकर्मेन्द्रियज्ञेयकार्यवेद्यप्रकृत्यादिवर्गद्योतकम् । पुनस्तदेव वर्णपञ्चकं बिन्दुव्याप्तावीषत्पूर्णतासु चकेषद्विवृतं चेद् वर्गचतुष्टयसंमिश्रणाऽऽत्मकाः शुद्धविद्यादिप्रतिपादका ईषद्विवृतप्रयत्नवन्त ऊष्माणः ।

संक्षेपतः तदेतत्तत्त्वबीजप्रदर्शककोष्ठकं प्रदर्श्यते ।

| बीजानि | तत्त्वानि | बीजानि | तत्त्वानि |
|---|---|---|---|
| ( १ ) कः | पृथ्वी | ( ६ ) चः | गन्धः |
| ( २ ) खः | आपः | ( ७ ) छः | रसः |
| ( ३ ) गः | तेजः | ( ८ ) जः | रूपम् |
| ( ४ ) घः | वायुः | ( ९ ) झः | स्पर्शः |
| ( ५ ) ङः | आकाशः | ( १० ) ञः | शब्दः |

| बीजानि | तत्त्वानि | बीजानि | तत्त्वानि |
|---|---|---|---|
| ( ११ ) टः | पायुः | ( १९ ) धः | त्वक् |
| ( १२ ) ठः | उपस्थः | ( २० ) नः | श्रोत्रम् |
| ( १३ ) डः | पाणी | ( २१ ) पः | प्रकृतिः |
| ( १४ ) ढः | पादौ | ( २२ ) फः | अहंक्रिया |
| ( १५ ) णः | वाक् | ( २३ ) बः | बुद्धिः |
| ( १६ ) तः | घ्राणम् | ( २४ ) भः | मनः |
| ( १७ ) थः | जिह्वा | ( २५ ) मः | पुरुषः |
| ( १८ ) दः | चक्षुः | | |

| बीजानि | तत्त्वानि | |
|---|---|---|
| ( २६ ) यः | कला ( वन्धः ) | वायोः सर्वकर्तृत्वशक्तिसङ्कोचात्कलामात्रकर्तृत्वरूपः । मायातत्त्वाधिष्ठानश्च |
| ( २७ ) रः | अविद्या ,, | अग्नेः सर्वज्ञताशक्तिरुपविद्यासंकोचादल्पज्ञतारूपः । |
| ( २८ ) लः | रागः ,, | पृथ्व्याः पूर्णत्वशक्तेः संकोचादाशंसारूपः । |
| ( २९ ) वः | कालः ,, | सलिलस्य नित्यत्वशक्तेः संकोचादनित्यतारूपः । |
| ( ३० ) लः | नियतिः ,, | आकाशस्य व्यापकत्वशक्तेः संकोचाद्देशनैयत्यरूपः । |

| बीजानि | तत्त्वानि |
|---|---|
| ( ३१ ) शः | शुद्धविद्या |
| ( ३२ ) षः | ईश्वरः |
| ( ३३ ) सः | सदाशिवः |
| ( ३४ ) हः | शक्तिः |
| ( ३५ ) क्षः | विन्दुरूपः शिवः |

( ३६ ) स्वराः सकलविश्वबीजभूताः कलाः । मायातत्त्वम् च । तत्र ईकारे माया बीजं यकारः मायास्थानम् इति विवेकः ।

इत्थषट्त्रिंशत्तत्त्वानि पशुपदक्रमेणनिर्दिष्टानि । मातृकानामनुलोमपाठेन विसर्गव्याप्तिः प्रदर्श्यते विलोम पाठेन विन्दुव्याप्तिरिति चिच्चैत्ययोः शिवशक्त्यात्मनो रन्योन्यभावोपपत्तिप्रदर्शनेन यस्य कस्यापि खण्डस्यापक्रमेण विलोमानुलोमावर्तनं सम्प्रदायसिद्धान्तः । तदुक्तम् "अन्योऽन्यलीन वपुषोरिह चैत्यचित्योः"रिति मा०वि०१।२१। लघुस्तुत्यां च "एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनम्" । इति।

तथा "कूटस्थं यदि वा पृथक् क्रमगतं यद्वास्थितं व्युत्क्रमात्" । इति च ल० स्तु ६

इत्थं मातृका महामन्त्रमयः सकलोऽयम्—पार्थिव–प्राकृत–मायिकरूपेण अण्डत्रयात्मा भेदाऽभेदरूपः ससारः जाग्रत्स्वप्नसुषुप्तितुर्याऽतितुर्यदशासुश्लिष्टः श्रीचक्रस्थ स्कन्धत्रये त्रिकोणसंश्लेषप्रतिबिम्बितः जाग्रदादिदशाविशेषवशेनैव भेदाऽभेदरूपतया विलसन् मनोविमर्शमात्रादनतिरिक्तत्वेन नैव पारमार्थिकभेदसत्तामवलम्बते । एतत्सर्वं ग्रन्थकृता प्रथमसूत्रद्वयेन परामृष्टम् । तद्यथा—

"जाग्रत्सुषुप्तिकृतदक्षिणवामभागां
स्वप्नस्वभावपरिक्लृप्तजघन्यभागाम् ।
तुर्यातितुर्यघटितानन्तहृत्प्रदेशां
प्राणेश्वरीं परशिवस्य परामृशामः ॥ १ ॥

स्वर्शस्वरोल्लिखितजागर सुप्त्यवस्था
मन्तःस्थसूचितसुषुप्त्युदितप्रबोधाम् ।
ऊष्मोक्तजागरदशोदितसुप्त्यवस्थां
मन्त्रोत्करस्य जननीं मनसा विशामः ॥ २ ॥ इति ।

तत्र तत्र टीकाकृता इतिसमयसिद्धान्तः इति खं० १–इव १५ सूत्र-व्याख्याने च महतामित्यस्य मन्त्रसमयविदामित्यर्थप्रदर्शनेन अत्र ग्रन्थे समयाचारसिद्धान्तः प्रतिपादित इति प्रतीयते । अत एव समयाचारा-द्धृत श्रीचक्रमनुसृत्यैवाऽत्र मातृकामहामन्त्र मातृकामयश्रीचक्रयोरैक्यं प्रतिपादितम् । तथा भास्कररायकृतललितासहस्रनाम भाष्ये १२५ पृष्ठे "मातृका वर्णरूपिणी" इत्यस्य नाम्नो विवरणाऽवसरे "मातृका-वर्णानामेव श्रीचक्रात्मकत्वं मातृकाविवेके षष्ठे पटले विस्तरेण प्रति-पादितम्" इत्युक्तेर्मातृकाविवेकः समयिनां तन्त्रमिति रूढिमवलम्ब्य तादृशार्थस्यैवात्र प्रतिपादनादस्याऽपि तथात्वं कल्प्यते ।

अयं ग्रन्थः पञ्चसु खण्डेषु परिसमाप्तः । तत्र प्रथमे खण्डे ग्रन्थ-तात्पर्यनिरूपणम् । ततस्त्रिषु पशुपदस्य सुषुप्त्यादिजागरान्त-भेदस्य संसारस्य स्वरूपवर्णनम्, पञ्चमे तुर्यदशायाः शिवपद-स्य अभेदसंसारस्य वर्णनम्, यद्यपि तुर्यदशायामपि चिद्विष-यत्वेन जाग्रदादीनां सम्भवस्तथापि तत्र चितेरैकरूप्याद्भेदवै-चित्र्याऽभावादेकविधत्वमेव तुर्यपदस्य । चतुर्थपर्यायतुर्यपद व्यपदे-शस्तु जीवावस्थापेक्षया बोध्यः । अत एव श्रीमद्भगवत्पादैरपि, गौड-पादभाष्ये तथोक्तम् "मायासंख्यातुरीयं परममृतमजम्" इत्याद्युक्तम्, "मायासंख्यापेक्षया तुरीय'मिति तद्व्याख्यातारः इति । अभेदपदस्यै-वाऽभ्यर्हितत्वात्प्रथमवर्णनीयत्वौचित्येऽपि मायायाः प्राबल्यात् भेद-पदस्य प्रथममवभासनात् तस्यैव प्रथमवर्णनीयता उचिता, तदुक्तम् "मायाबलात्प्रथमभासिजडस्वभावं विद्योदयादथ विकस्वरचिन्म-यत्वम्" इति भेदपुरस्सरवर्णनं नाऽसङ्गतम् ।

पशुसंसारः सुषुप्त्यादिजागरान्तः—तथाहि सुषुप्तिरेवाऽत्र प्रारम्भपदेच्छारूपिणी जगतः कारणदशा । ततः स्वप्नावस्था—अत्र विमर्शस्य किञ्चिदुन्मेषे भेदविकल्पोदयान्मध्यपदा ज्ञानात्मिका जगतः प्रसवदशा । जाग्रदवस्था च विमर्शस्य पूर्णोन्मेषे जगतः प्रवृद्धदशाऽन्त्यपदाक्रियारूपाणि । तुर्यपदमभेदसंसारस्तु जागरादिसुषुप्त्यन्तः आरोहावरोहन्यायेन जीवसंसारस्याऽन्तिमावधितः शिवसंसारस्य प्रारम्भ इति तत्र जागरः प्रारम्भपदम्, स्वप्नो मध्यपदम्, सुषुप्तिरन्त्यपदम् इत्यामोद्गमावर्तनम् । तत्र मध्ये सान्ध्यस्थानीयः शिवजीवसंसारयोरुभयो र्यौगपद्येनाऽनुसंघाताऽवस्थात्रयात्मकः परशिवो बोध्यः । अनेनाऽऽवर्तनक्रमेण जाग्रदादीनां प्रत्येकमिच्छाज्ञानक्रियात्मत्वमवगन्तव्यम्, इत्यन्योन्याश्लेषतैव श्रीचक्रस्य त्रिकोणान्योन्यश्लेषेण ज्ञाप्यते—

मातृकामहामन्त्र-श्रीचक्र-दशानामैक्यबोधकं कोष्ठकम् ।

| | | | | |
|---|---|---|---|---|
| स्वराः | सौम्याः | सुषुप्तिः | चतुर्दशारम् | प्रमेयपुरम् । |
| स्पर्शाः | सौराः | जाग्रत् | दशारद्वयम् | प्रमाण पुरम् । |
| अन्तःस्थाः | आग्नेयाः | स्वप्नः | अष्टारम् | प्रमातृपुरम् । |
| उष्माणः | आग्नेयाः | तुर्यम् | चतुरस्रम् | |

| | | | |
|---|---|---|---|
| षोडशदलम् | आग्नेयम् | जाग्रत् । | प्रमातृपुरम् । |
| अष्टदलम् | ,, | स्वप्नः | प्रमाणपुरम् । |
| वृत्तत्रयम् | ,, | सुषुप्तिः | प्रमेयपुरम् । |

| | | |
|---|---|---|
| विसर्गः | त्रिकोणम् | भेदसाम्राज्यस्थानम् क्रियात्मकम् । |
| विन्दुः | विन्दुः | अभेदसाम्राज्यस्थानम् ज्ञानात्मकम् । |
| विसर्गविन्दुसमष्टिः | महाविन्दुः | सामरस्य स्थानम् । |

महायशोस्तु स्वप्नोऽपि सूर्यात्मक एवेति स्पष्टम् ३०-१-३२ पृष्ठेषु ।

ग्रन्थकर्ताऽयं स्वतन्त्रानन्दनाथः कस्मिन् देशे काले वाऽभूदिति विषये मूकमेव पुरावृत्तम् । केवलं, "स्वतन्त्रो नाम सिद्धो ऽभूदि" त्यादि टीकाकारकृतिरेवोपलभ्यते सा च नात्र विषये विशेषतोऽर्थसा-

धिकेति तत्रैव द्रष्टव्या। आधुनिकमुद्रिततन्त्रग्रन्थेषु कुत्राऽपि एतद्ग्रन्थस्थसूत्राणामुद्धरणं प्रायो न दृश्यते अत्रापि केवलं टीकाया- (पृ० २४) मेकमेवोद्धरणं बालामन्त्रप्रस्तावस्थम् "क्रमगतं यद्वास्थितं व्युत्क्रमात्" इति, एकश्चान्यत् "विद्यामातृविवेचने पुरभिदः प्रज्ञाऽपि संमुह्यति" इति ग्रन्थनिर्देशरहितमेवास्ते। तेन लघुस्तुतिकारतोऽर्वाचीनोयं टीकाकार इत्येतावन्मात्रं परिचीयतेनाधिकमिति मौनमेव शरणीक्रियतेऽत्रविषयेऽलं स्वमतिप्रसूतकल्पितकल्पनाऽनुसरणेन।

यया रीत्याऽत्र ग्रन्थे तान्त्रिकसिद्धान्तः प्रतिपादितोऽस्ति सा परिपाटी अन्यतन्त्रग्रन्थेषु प्रायो नोपलभ्यते, तेन वस्तुतो यथार्थनामाऽयं ग्रन्थकृत्प्रतिभाति–टीकाकृताऽयमेव हेतुरन्यत उद्धरणानुद्धरणे प्रदर्शितः "आदिसिद्धोपदेशोऽयमनिर्वाह्यः परोक्तिभिः। ततः संवादसन्नाहैर्नादृतो ग्रन्थविस्तरः।" इति।

अस्य ग्रन्थस्य शोधने अस्य पूर्वशोधकानुसृतां रीतिमनुसरन् दत्तावधानोऽपि आदर्शपुस्तकान्तराऽभावात् प्राप्तस्याऽपि प्रतिलिपितयाऽशुद्धिबाहुल्येन विषयस्यस्वातन्त्र्येणग्रन्थान्तरसंवादाऽनवसरतया च सन्देहाऽनिवर्तकतया प्रचुरतराशुद्धिशोधनेऽसमर्थोऽपि काशीस्थराजकीयसंस्कृतविद्यालयाऽध्यक्षाणाम् विद्वदग्रगण्यानाम् एम् ए० इति विरुदभाजां तत्रश्रीमतां परमश्रद्धास्पदपण्डितप्रवरश्रीगोपीनाथकविराज शर्मणां साहाय्येन लब्धसाहसः साहित्याचार्यवेदान्तशास्त्र्युपाध्यायोपाह्व पं० वीरमणि प्रसादशर्मभिः एम्. ए., एल्. एल्. बी० महोदयैश्चानुकम्पितो यत्र तत्र काश्चिदशुद्धीर्यथामति शोधयित्वा अवशिष्टानां पुनर्महति शुद्धिपत्रे कविवरपूज्यपितृव्यपादपण्डितसदानन्दप्रसादाधिगतप्रतिभामात्रकल्पितानि शुद्धरूपाणि प्रकाशितवान्। मुद्रणसमयेऽपि तत्र तत्र सन्देहस्थलम् ? इति चिह्नितं ( ) इति [ ] इति वा कोष्ठकेनाऽन्तरितम् च, तथा च तत्र शुद्धिपत्रेऽपि स्वमतिमात्रशो-

श्रितमपि तादृश कोष्ठकेनान्तरितम् । तत्रापिसीसकाक्षरसंयोजकप्रमादसाहाय्येनोपबृंहितया मनुजसुलभदृष्टिदोषद्वितीयया सम्पादनकलाऽनभिज्ञतया परिश्रमसाफल्येऽपरितुष्यन् यत्र क्वचिदुपलभ्यमानान्यशुद्धरूपाणि स्वमतिवैभवात्-पुस्तकान्तर सम्वादाद्वा शोधयित्वा प्रकाशकसविधेप्रेषणाऽनुग्रहाय शुद्धिपत्रानुसारतः पठनाय च विपश्चित्प्रवरान् सानुनयं प्रार्थयते वाराणसेय राजकीयप्रधानसंस्कृतपाठशालाप्रधानाध्यापकन्यायव्याकरणवेदान्तमीमांसादिविविधविद्याविलासभूमीनां तत्र भवतांश्रीमद्रामभवनोपाध्यायानामन्तेवसन्—

विदुषामनुचरः—

डबरालोपनामाललिताप्रसादशर्मा ।

## वृत्तिप्रारम्भ एव पठनीयाः ।

इमे टीकाकृताः श्लोकाः शोधकप्रमादात् टीकाप्रारम्भ एव सम्मुद्रणार्हा अपि ग्रन्थान्ते मुद्रिता अतस्तत उद्धृत्य प्रारम्भ पृष्ठस्य वामतोऽत्र सन्निवेश्यन्ते ।

नमस्तेजस्त्रयीसर्गविश्रान्तस्थानशक्तये ।
तदुत्तीर्णोर्ध्वविश्रान्तिस्फूर्तये गुरुमूर्तये ॥ १ ॥
स्वतन्त्रो नाम सिद्धोऽभूदादिनाथस्य लोचनात् ।
मातृकार्थोपदेशेन लोकाननुजिघृक्षतः ॥ २ ॥

वृत्तिप्रारम्भ एव पठनीया: ।

प्रभावाद्देवदेवस्य स सद्योमातृकार्थवित् ।
रहस्यमेतद्योगेषु योजयेति च शासितः ॥ ३ ॥
स विसृष्टस्ततस्तेन कनकाचलकन्दरे ।
समाहितमनाश्चक्रे मातृकार्थप्रचिन्तनम् ॥ ४ ॥
तस्य मूलमनोरर्थं तत्सूत्रैः सञ्जिघृक्षतः ।
व्यामूढप्रतिभाशक्तेः प्रमेयार्जवनिश्चये ॥ ५ ॥
पपात गगनादग्रे श्रीचक्रं शिवचोदितम् ।
शैवशाक्तचतुः पञ्चत्रिकोणश्लेषजीवितम् ॥ ६ ॥
मन्वश्रदिग्गरद्वन्द्वनागाश्र(स्र)त्र्य(स्र)श्रबिन्दुभिः ।
स्पष्टैर्विभाव्यैर्वेदाश्र(स्र)नृपनागदलैर्युतम् ॥ ७ ॥
नवचक्रात्मकं यन्त्र त्रि(मि)तिचक्रस्य तत्त्रयम् ।
तथालोक्य महाबिम्बमातृकार्थप्रकाशकम् ॥ ८ ॥
स जातप्रतिभः सद्यो विद्यामाद्यामनेकधा ।
व्याचष्टे सुगमैः सूत्रैस्तानि सिद्धेषु चार्पयत् ॥ ९ ॥
ते च सिद्धास्तदेशान्मूलमन्त्रार्थशासनम् ।
पात्रेषु न्यक्षिपन्–गुप्तं पारम्पर्यप्रवृत्तये ॥ १० ॥
एवं परम्पराप्राप्तमहामन्त्रार्थशासने ।
श्लाघ्यते मातृकाचक्रविवेको नामसङ्ग्रहः ॥ ११ ॥
ग्रन्थोऽयमुपदेशैकबोध्यसिद्धजनप्रियः ।
वृत्त्याविविच्यते लब्ध्या शिवानन्दात्मनामया ॥ १२ ॥
आदिसिद्धोपदेशोऽयमनिर्वाह्यः परोक्तिभिः ।
ततः संम्वादसन्नाहैर्नादृतो ग्रन्थविस्तरः ॥ १३ ॥

॥ श्रीः ॥

# मातृकाचक्रविवेकः

## स्वतन्त्रानन्दनाथविरचितः ।

---

### प्रथमः खण्डः ।

जाग्रत्सुषुप्तिकृतदक्षिणवामभागां
स्वप्नस्वभावपरिक्लृप्तजघन्यभागाम् ।

---

इह खलु परमशिवभट्टारकस्य प्राणभूतया विद्याविद्योभयचमत्कारमय्या स्वरसवाहिन्या विमर्शशक्त्या समुन्मीलितासु बाह्याभ्यन्तरविविधविचित्रसिद्धान्तविप्रतिपत्तिषु विलुठतो लोकस्यानुग्रहाय शिवप्रयुक्तः स्वतन्त्रानन्दनामा महासिद्धः स्वरसिद्धतया निखिलवाङ्मयनिदानतया च महाप्रमाणस्य मातृकामहामन्त्रस्यार्थोपदेशेन निखिलसंशयनिरासनिराकुलं परमार्थस्वरूपं निरूपयितुकाम आदौ महामन्त्रार्थरूपिणीं भगवतो महादेवस्य महाशक्तिं ग्रन्थस्य पारम्पर्यप्रवृत्तिरूपाभीष्टसिद्धये परामृशति—जाग्रदित्यादि । सुप्तिनिवृत्तौ घटपटादीनां चिद्वेदनानुसन्धानदशा जाग्रत्, सुषुप्तिर्जडनिद्रा, क्रमेण ताभ्यां कृतौ दक्षिणवामपार्श्वौ यया ताम् । जाग्रतः क्रियारूपतया दक्षिणभागत्वं, कर्मप्रधानः खलु दक्षिणभागः शरीरेऽनुभूयते । निद्रात्मिकायाः सुप्तेर्वामभागत्वं, वामभागः खलु निष्क्रियः स्त्रीभागः । स्वप्ने-

तुर्यातितुर्यघटितानन हृत्प्रदेशां
प्राणेश्वरीं परशिवस्य परामृशामः ॥ १ ॥

---

ल्याादि। अनिवृत्तायां सुप्तौ मानसिको भेदः संसारः स्वप्नः, स एव स्वभावोऽवस्थाविशेषः, तेन परिक्लृप्तो जघन्यभागो योनिभागो यया तां, सुषुप्तिजाग्रन्मध्यदशायाः स्वप्नस्य मध्याङ्गौचित्ये विकल्पोदयस्थानत्वाद्योनित्वमुक्तम्। एवं च सुषुप्तिः संसारस्य गर्भदशा, स्वप्नः प्रसवदशा, जाग्रत् प्रवृद्धिदशेति वेदितव्यम्। एवं जीवावस्थात्रयात्मकं त्रिकोणं शरीरचक्रस्थितमनुसन्धाय तत्रैव स्थितं शिवत्रिकोणमनुसन्धत्ते—तुर्येति। तुर्यं चतुर्थदशा चेत्यव्याप्तिमती। जीवावस्थात्रये चित्कारणकस्य चास्य चिन्मयत्वानुसन्धानदशा तुर्यम्। तत्रापि यद्यपि चिद्व्याप्तिविषयभूतजाग्रदाद्यवस्थात्रयवशादवस्थात्रयसम्भवः, तथापि सर्वव्याप्तिमत्त्वाच्चितैकैक्येन वैचित्र्याभावादेकविधत्वमुक्तं तुर्यस्य। अतीततुर्यं तुर्यातीतं संसारकलङ्कास्पृष्टशुद्धान्तर्मुखचिद्विश्रान्तिः, ताभ्यां क्रमेण घटितमुखहृदयभागाम्। तुर्यस्य जाग्रदादिदशाविजृम्भमाणचेत्यकवलनान्मुखत्वमुक्तम्। मुखं हि चर्वणव्यापारवत्। अतितुर्यं निखिलदशाप्राणभूतमिति हृदयत्वेनोक्तम्। एवं च जाग्रदादिदशाचतुष्टयात्मकचतुरस्रचक्रस्य अथवा जाग्रदाद्युपाधिवशात् तुर्यस्यापि त्रैविध्याभिमाने शिवजीवत्रिकोणद्वयश्लेषसम्भावितषट्कोणचक्रस्य वा शरीररूपेणावस्थितस्य मध्ये चक्रनाभिपदे हृदयदेशे तुर्यातीतविश्रान्त्यात्मना प्राणकलया स्फुरन्तीं चतुरङ्गां षडङ्गां वा परमशिवस्य प्राणेश्वरीं सत्तासंपादनीम्। अनेन पञ्चावस्थोत्तरा सार्वत्रिकतया अखण्डरूपिणी

स्पर्शस्वरोल्लिखितजागरसुप्त्यवस्था-
मन्तःस्थसूचितसुषुप्त्युदितप्रबोधाम् ।
ऊष्मोक्तजागरदशोदितसुप्त्यवस्थां
मन्त्रोत्करस्य जननीं मनसा विशामः ॥ २ ॥

---

परमशिवदशा काचिदङ्गीकृतेति शिवाधिक्यमुक्तम् । प्राणेश्वरीमित्यनेन यद्यपि सा परमशिवदशा सम्भवति तथापि तस्याश्चित्सारभूतविमर्शशक्त्यधीना सत्तेति शक्त्युत्कर्षः परिगृहीत इति विज्ञेयम् । परामृशाम इत्यनेन नमस्कारादेः सर्वस्या अपि क्रियायाः पर्यालोचने विमर्शमात्रत्वमेवेति सूचितम् ॥ १ ॥

अथेयमेव पञ्चावस्थात्मकपञ्चावयवमूर्तिः सकलसिद्धान्तसमष्टिरूपिणी परमशिवशक्तिर्मातृकामहामन्त्रेणोच्यते इत्याह--स्पर्शेत्यादि । कादयो मावसानाः स्पर्शाः सृष्टिप्रलयविषयत्वात्, अकारादिविसर्गान्ताः स्वराः उच्चारणे सङ्कोचविकासबाहुल्याभावान्नादकल्पा नादा एवेत्यर्थः । स्वरो नादः । स्पर्शैः स्वरैश्च क्रमेण उल्लिखिते बोधिते जागरसुप्तिदशे यया तां, स्पर्शैर्जागरं स्वरैः सुप्तिं च व्यञ्जयन्तीमित्यर्थः । अन्तःस्थेत्यादि । यरलवा अन्तःस्था, स्वरस्पर्शयोरन्तर्मध्ये तिष्ठन्तीति तथोक्ताः । तैः सूचितः बोधितः सुषुप्त्युदितः सुषुप्तिदशायामेवोदितः न तु जागरवत्सुप्तिविरामे, प्रबोधः घटपटाद्यनुसन्धानरूपो बोधः स्वप्नमिति यावत्, यया ताम् । अन्तःस्थवर्णेषु स्पर्शदशायामपगमयन्तीमित्यर्थः । ऊष्मेत्यादि । शषसहा ऊष्माणः । पारिभाषिकोऽयं शब्दः । अथवा सङ्कुचितरूपतया जडानां स्पर्शवर्गाणां पुनःसङ्कोचत्यागरूप ऊष्मादिविकृतताप्रारम्भल-

सङ्कोचसंश्रयणवर्जनभावभङ्ग्या
जाग्रत्सुषुप्तिदशयोर्गमकौ प्रयत्नौ ।

---

क्षणः प्रयत्नविशेषः येषु वर्णेष्विति ऊष्माणस्तैरुक्ता जागरदशायामेवोदिता उत्थिता सुषुप्त्यवस्था जागरादूर्ध्वं सुप्तेः प्राग्भवन्ती योगनिद्राख्या जीवावस्था तुर्यं यया ताम् । मन्त्रोत्करस्य बाला श्रीविद्या परा महार्थशाम्भवी चरणविद्यादि पारलौकिकस्य पञ्चाक्षर्यष्टाक्षर्यादेः लौकिकस्य मन्त्रसमुदायस्य जननीं कारणभूतां मातृकामित्यर्थः । मनसा विमृशामः सकलमूलतया सकलसिद्धिहेतुत्वात् विविधसमयसमुत्पादितपरमार्थविषयसंशयसमुच्छेदिमहाप्रमाणत्वाच्च तदेकाग्रचित्ता भवाम इत्यर्थः । अत्रोष्मवर्णोक्तेः तुर्ये क्षकाररूपकूटाक्षरविषयस्य तुर्यातीतस्य समुल्लेखनं च विवक्षितमिति निरवशेषं प्रमेयम् ॥ २ ॥

स्पर्शादिभिर्वर्णैः जाग्रदादयो दशा ज्ञाप्यन्त इत्युक्तम् । ज्ञाप्यज्ञापकयोरभिधालक्षणादिषु केनचित्सम्बन्धेन भवितव्यम् । कोऽयमत्र सम्बन्ध इत्याशङ्क्याह--सङ्कोचेति । सङ्कोचस्य संश्रयणं परिग्रहः वर्जनं तत्त्यागः तयोर्भावः स्वभावः संस्थानविशेष इति यावत् । तस्य भङ्ग्या प्रकारेण सादृश्येनेत्यर्थः । जाग्रत्सुषुप्तिदशयोर्यथाक्रमं गमकौ ज्ञापकौ द्वौ यथाक्रमं स्पर्शस्वराक्षरगतौ स्पृष्टताविवृतते द्वौ प्रयत्नौ । स्पृष्टता नाम कण्ठताल्वादीनामधरोर्ध्वभागसङ्घट्टनरूपो वर्णोच्चारणप्रयत्नः, विवृतता नाम सङ्घट्टितस्य कण्ठादिभागद्वयस्य पुनर्विघट्टनप्रयत्नः । कण्ठादिभागयोः सङ्घट्टनमेव स्पृष्टता, विघट्टनमेव विवृतता । एतयोः सङ्कोचग्रहणतत्त्यागलक्षणौ प्रयत्नौ साद-

द्वौ स्पृष्टताविवृतते विदितौ सुधीभिः
स्पर्शस्वराक्षरगतौ परिशीलयामः ॥ ३ ॥
स्पृष्टिर्यवर्गविषया विवृतत्वयुक्ता
स्पृष्टयन्विता विवृतता च शवर्गनिष्ठा ।

---

श्या जाग्रत् सुषुप्त्योर्बोधकौ। अभिनयनाद् व्यञ्जकाविति भावः। यथा अङ्गुलिमुकुलनादिर्व्यञ्जकः तद्वदिति भावः। घटपटादिग्रहणपदे जाग्रति त्वात्मनः सङ्कोचभावः विश्रान्तिपदे सुषुप्तौ तु पूर्णभाव इत्येतदनुभववेद्यम् । अतो जाग्रत्सुषुप्त्योः स्पर्शस्वरकदम्बका-भ्यां सङ्कोचग्रहणतत्त्यागरूपमवस्थासादृश्यं प्रेक्षावद्भिरङ्गीक्रियत एव। तदेव सादृश्यं व्यङ्ग्यव्यञ्जकसम्बन्धकल्पकमित्यभिप्रायः। सुधीभिर्विदिताविति विशेषणेन वर्णानामवस्थानां च व्यङ्ग्यव्यञ्जक-सम्बन्धनिदानभूतौ प्रयत्नौ प्रेक्षावन्मात्रगम्याविल्युक्तानां वर्णा-नामेव दशागमकत्वेऽपि सङ्कोचतत्त्यागरूपमवस्थासादृश्यं वर्णा-नां प्रयत्नमूलमिति प्रयत्नयोरवस्थागमकत्वमुपचरितं परिशीलयाम इत्येतत्प्रयत्नपर्यालोचनमेवास्माभिरप्यनुसन्धीयते नातः परः समाधिरित्युपादिष्टम् ॥ ३ ॥

अथान्तःस्थोष्मणां स्वप्नतुर्यगमकत्वे सम्बन्धमुपपादयति—स्पृष्टिरित्यादि। यवर्गविषयाः स्पृष्टिः स्पृष्टता प्रयत्नः विवृतत्व-युक्ता मिश्रप्रयत्न इत्यर्थः। अत्र स्पृष्टतायाः प्राधान्यं विवृतता-यास्तु तदनुवृत्त्या गुणत्वम्। एवं च यवर्गोच्चारणप्रयत्नस्य स्पृष्ट-ताया विवृतत्वसङ्कीर्णतया असमग्रत्वे ईषत्स्पृष्टत्वमिति विवेकः। शवर्गोच्चारणप्रयत्नस्य विवृततायाः स्पृष्टतासङ्कीर्णतया सामग्र्य-भावे ईषद्विवृतत्वमेवेति वेदितव्यम् । अत एवैतौ प्रयत्नौ अस-

तौ स्वप्नतुर्यदशयोर्गमकौ प्रथला-
वेतौ स्मराम्यसकलापरिपूर्तिपूर्त्योः ॥ ४ ॥
पूर्णैव पूर्तिरविकल्पपदे सुषुप्तौ
जाग्रत्यपूर्तिरपि संसृतिधाम्नि तद्वत् ।

---

कलपरिपूर्तिपूर्त्योः असमग्रसङ्कोचभावयोः स्वप्नतुर्यदशयोः यथाक्रमं गमकौ ईषत्सङ्कोचरूपस्य स्वप्नस्य ईषत्स्पृष्टता ईषत्पूर्णरूपस्य तुर्यस्य ईषद्विवृतता च पूर्ववत्साद‍ृश्यात् व्यज्यत इति भावः । अत्रैव गम्यते 'स्पृष्टं करणं स्पर्शानामीषत्स्पृष्टमन्तःस्थानाम्'इति वैयाकरणैर्यदुक्तं तत्साधु विवृतमूष्मणां स्वराणां चेत्येतत्तु उष्मस्वरानुभवविरोधादुपेक्षणीयमिति । स्मरामीति । स्वानुसन्धानेनास्य उपदेश्यजनशिक्षा विवक्षिता ॥ ४ ॥

अथानुभववेद्यं जाग्रदादीनां सङ्कोचविकासाद्यानन्दान्वयायोपपादयति--पूर्णेत्यादि । अविकल्पपदे निर्विकल्पकक्ष्यायां बाह्याभ्यन्तरेन्द्रियविश्रान्तिरूपत्वादिति भावः । इदं च विशेषणं पूर्तिसमग्रताया हेतुत्वेनोक्तम् । विकल्पाभाव एव निराघटपूर्णभावबोधक इत्यनुभवः प्रमाणम् । अविकल्पपदत्वात् सुषुप्तौ पूर्तिः पूर्णैव समग्रैव संसृतिधाम्नि घटपटाद्यनुसन्धानरूपाविश्रान्त्यस्पृष्टसंसारपदे गाढविकल्पोदयस्थान इति भावः । इदं च सङ्कोचभावसमग्रताया हेतुत्वेनोक्तं विशेषणम् । गाढविकल्पोदय एव महासङ्कोचसमर्पक इति चानुभव एव प्रमाणम् । जाग्रत्सुषुप्तिसमवायपदे मिश्रपदे तुर्ये चतुर्थदशायाम् । यद्यपि तुर्ये चिद्विश्रान्तिलक्षणसुषुप्तिव्याप्तिः तथापि सा व्याप्तिश्चेत्येष्वनुसन्धीयत इति विकल्पस्पृष्टतयोर्जाग्रतश्चानुवृत्तिरिति मिश्रत्वमेव । स्वप्ने च तथाविधे

जाग्रत्सुषुप्तिसमवायपदे तुरीये
स्वप्ने च तादृशि तयोरसमग्रतैव ॥ ५ ॥
स्वप्नः सुषुप्त्यनुगतं ननु जाग्रदेव
तुर्यं च जाग्रदनुवृत्तसुषुप्तिरेव ।
स्वप्नस्तथा च सति जाग्रत एव भेद-
स्तुर्या दशापि च तथैव सुषुप्तिभेदः ॥ ६ ॥

---

मिश्ररूपे, यद्यपि स्वप्नस्य विकल्पप्राधान्यात् जाग्रत्सुषुप्तिसम-वाय उभयोरेकरूपः तथापि मिश्रत्वमात्रसामान्यविवक्षया स्वप्नस्य तुर्यसाम्यमुक्तम् । तादृशीति । तयोः पूर्त्यपूर्त्योः असमग्रतैव तुर्ये पूर्त्यसामग्र्यं स्वप्ने त्वपूर्त्यसामग्र्यं च क्रमेण योज्यम् ॥ ५ ॥

उक्तप्रकारेण स्पर्शादिभिर्वर्णैः जाग्रदादीनां सङ्कोचभावादि-लक्षणंसादृश्येन गम्यगमकभावसंबन्धनिबन्धनं प्रतिपाद्य ज्ञान-क्रियारूपतया प्रत्येकं द्वैविध्यं जाग्रत्सुषुप्त्योः । तत्र स्वप्नो ज्ञान-जाग्रत्, या जाग्रदिति प्रसिद्धा दशा सा क्रियाजाग्रत्, तदा तुर्यं ज्ञानसुषुप्तिः या सुप्तिः या सुषुप्तिरिति प्रसिद्धदशा सा क्रियासुषु-प्तिः । ततः स्वप्नो जाग्रद्भेद एव तुर्यं च सुषुप्तिभेद एवेति दशाच-तुष्टयस्य वर्गद्वयरूपतां तत्स्वरूपज्ञानाद्यधिकरणाय समुपदिशति-स्वप्नः सुषुप्त्यनुगतमित्यादिना । ननु स्वप्नो नाम जाग्रदेव यथा जाग्रति घटपटादयो गृह्यन्ते तथात्रापीति । अयमेव विशेषः यत्स्वप्ने सुषुप्तेरनुवृत्तिः जाग्रति तन्निवृत्तिरिति । अथ तुर्यं च सुषुप्तिरेव । तथा विश्रान्त्युपलम्भादत्र चायमेव विशेषः यत्तुर्ये जाग्रदनुवृत्तिः सुषुप्तौ तु तन्निवृत्तिरिति । एवं विशेषाल्पतया स्व-प्नतुरीययोः जाग्रत्सुषुप्तिभेदत्वं वेदितव्यमिति भावः ॥ ६ ॥

ज्ञानात्मनान्तरुदिते खलु बोधसुप्ति-
स्वप्नस्तुरीयमिति नामविशेषभाजौ ।
बाह्ये क्रियात्मकतयोदितयोस्तयोः स्या-
दाख्या प्रबोध इति सुप्तिरिति प्रसिद्धा ॥ ७ ॥
जाग्रद्बहिर्विलसनं ननु भेदसृष्टेः
स्वप्नान्तरुल्लसनमित्युभयी दशैव ।

---

स्वप्नतुर्ययोर्जाग्रत्सुषुप्त्यपेक्षामभिस्फुटीकरोति–ज्ञानात्मनेति । ज्ञानाकारत्वमेव वर्णभेद इति प्रक्रान्तप्रमेयतात्पर्यम् । ज्ञानात्मनेति । बोधश्च सुप्तिश्च बोधसुप्तिरित्यर्थः । प्रथममन्तः अभ्यन्तरकक्षायां ज्ञानात्मना ज्ञानरूपेण उदिते सति यथाक्रमं स्वप्नस्तुरीयमिति नामविशेषौ भवतः । अथ बाह्ये बाह्येन्द्रियकक्षायां क्रियात्मकतया क्रियारूपेण उदितयोस्तयोर्जाग्रत्सुषुप्त्योः प्रबोध इति सुप्तिरिति जाग्रत्सुषुप्तिरिति प्रसिद्धाख्या व्यवहारो भवतीत्यर्थः । एतेनाभ्यन्तरेन्द्रियानुसन्धानं ज्ञानरूपं बाह्येन्द्रियानुसन्धानं क्रियारूपमिति वेदितव्यम् । संसृतिश्च विश्रान्तिश्च प्रथममाभ्यन्तरेन्द्रियानुसंहिता सती पश्चाद् बाह्येन्द्रियप्रथायामवतरतीति विवेकः । सर्वस्यापि भावस्य शिवशक्त्यात्मकतया ज्ञानक्रियारूपत्वमिति भावः । एवं च ज्ञानजाग्रत्क्रियाजाग्रज्ज्ञानसुषुप्तिः क्रियासुषुप्तिः पुनरपि ज्ञानजाग्रदादीत्येवं दशाचतुष्टयादवतरतस्तुर्यातीतनाभेः कालचक्रस्य परिभ्रमणमनुसन्धेयमिति तात्पर्यम् ॥ ७ ॥

इदानीं जाग्रदादिदशाचतुष्टयस्य भेदाभेदरूपसंसारतद्विश्रान्तिस्वभावतां यथायोगमुपदर्शयति–जाग्रद्बहिरित्यादि । सृष्टिः

तुर्याभिधानमुपयात्यविभेदसृष्टौ
सृष्टिद्वयस्य जनिविश्रमभूस्सुषुप्तिः ॥ ८ ॥

---

प्रवृत्तिरूपसंसारः भेदसृष्टेः भेदरूपप्रवृत्तिसंसारस्य बहिर्विलसनं बाह्येन्द्रियकक्ष्यायामवभासनं जाग्रत्, तस्या एव भेदसृष्टेः अन्तरुल्लसनं आभ्यन्तरेन्द्रियकक्ष्यायां स्फुरणं स्वप्नः, दशाद्वयमिदं पशोः संसारभूमिरिति वेदितव्यम् । इत्युभयी दशैव जाग्रत्स्वप्नरूपदशाद्वयमेवाविभेदसृष्टिः । अविभेदो विभेदस्याभावः संहारः विश्रान्त्यौन्मुख्येन भेदनिवृत्तिमार्गपरिग्रहः ततसृष्टौ तुर्याभिधानमुपयाति भेदसंसारादयं मार्गः जाग्रदन्तदशात्रयापेक्षया चतुर्थत्वाच्चतुर्थः, चतुर्थपर्यायः खलु तुर्यशब्दः । सुषुप्तिस्वभावं दर्शयति–सृष्टिद्वयेति । सृष्टिद्वयस्य भेदाभेदरूपस्य जनिरुत्पत्तिः विश्रमो विलयः तद्भूस्तत्पदं सुषुप्तिः सुषुप्तेर्भेदाभेदविश्रान्तिरूपतया प्रतिपादयिष्यमाणया जीवशिवसंसारोदयविलयभूमित्वम् । एतदुक्तं भवति–सुषुप्त्यादिजाग्रदन्तेन भेदरूपेण पदत्रयेण जीवः संसरति । जाग्रदादिसुषुप्त्यन्तेनाभेदरूपेण तुर्याभिधानजुषा तेनैव पदत्रयेण शिवाख्यानान्विश्रमते तं विश्रममार्गं पाशमेव भजन्नपि मायया न विमृशति । एवं शिवोऽपीच्छाज्ञानक्रियापर्यायभेदरहितसुषुप्तिस्वप्नजाग्रत्तयेव संसरति, तुर्यपर्यायजाग्रदादिसुषुप्त्यन्तानिवृत्तिमार्गेण विश्रमते च । यद्यपि शिवे प्रवृत्तिमार्गयोरभेदैकरूपत्वात् तुर्यव्यवहारो विद्यते तथापि निवृत्तिमार्ग एव तस्य व्यवहारस्य मुख्यत्वमिति महोपदेशः । अद्वैतसंसारस्य द्वैतसंसारसमः समाधिरित्युत्तरप्रतिपादयिष्यमाणेषु तत्पदेषु तत्प्रक्रियोन्नयनम् ॥ ८ ॥

सृष्टा बहिः शिवचिता प्रकृतिर्विसर्ग-
स्तां स्वात्मना कवलयन् शिव एष बिन्दुः ।

---

एवं दशास्वरूपमुपदिश्य तदधिष्ठातृभूतं शिवजीवस्वरूपं निरूपयिष्यन् प्रकृतोपयुक्ततया मन्त्रसमयसिद्धां बिन्दुविसर्गपरिभाषां व्युत्पादयति—सृष्टा बहिरित्यादि । शिवचिता शिव इति व्यवह्रियमाणया चिता प्रकाशतत्त्वेन बहिः बहिरिव न तु परमार्थतो बहिः। सर्वव्यापिवस्तुनः प्रकाशभित्तिलग्नतायां सत्यामेव सत्तासिद्धेः तद्बहिष्ठतायां तदसिद्धेः । सृष्टा विसृष्टा । विसर्जनमपि चमत्कारमात्रा। प्रकृतिः स्वभावः विमर्श इत्यवगन्तव्यम् । प्रकाशस्य वा स्वभावो विमर्शः । येन स्वभावेन विना प्रकाशस्यार्थोपरागेऽपि स्फटिकादिकस्येव जाड्यं प्रसज्यत इति प्राप्तस्वसंविच्छास्त्रकारैरुद्घोषितमन्त्रमात्रसमयं दीक्षानन्तरमधिकृतसंविच्छास्त्रसिद्धान्ता एव परमरहस्यरूपस्य मन्त्रार्थस्योपदेशाधिकारिण इत्यस्माभिरिह मन्त्रार्थविवेकप्रस्तावे संविन्मतसारमात्रमेवोद्गीर्यत इत्यनभियोगः । प्रकाशो हि स्वस्वभावभूतं स्वात्मविश्रान्तं पराप्रकृतिस्वातन्त्र्यमायाविद्यादिशब्दैरागमिकैर्व्यवह्रियमाणं जगद्बीजभूतं विमर्शं कदाचित् प्रपञ्चानुसन्धित्सायां स्वात्मभित्तावेव बहिरिव विसृज्यत इति विसर्गशब्दवाच्यो विमर्शो वेद्याकारवान् वेदकं कवलयति अत एव प्रमाता च भवति । न च वेदकश्चिद्रूपोऽपि प्रमुषितवैभवः प्रमेयतामुपगतो जीवो भवति । यदा पुनः स शिवप्रकाशः प्रपञ्चसञ्जिहीर्षायां तां विमर्शरूपिणीं प्रकृतिं स्वात्मना कवलयति तथा भिदिधातोरविच्छेदार्थतया भिद्यतेऽविच्छिद्यत इति बिन्दुशब्दव्यवहार्यो भवति । बिन्दुरच्छे-

संसारविश्रमजुषोरिति नामधेये
संसारिणौ पशुशिवौ च पशुः शिवश्च ॥ ९ ॥
द्वैतात्मकं भवति संसरणं पशोस्त-
दद्वैतरूपमभवस्य परस्य शम्भोः ।

---

दकारणमिति भारतीयानां च व्यवहारः । अपरिच्छिन्नस्वभावे भवतीत्यभिप्रायः । एवं वेद्यात्मनो विमर्शस्य सर्गत्वं वेदात्मनः प्रकाशस्य विन्दुत्वमुपदिष्टं भवति । एतदेवाह—संसारविश्रमजुषोरिति । संसरणस्वभावो विमर्शः अरुणस्वभावः प्रकाशः तयोरित्युक्तप्रकाशौ विसर्गबिन्दुशब्दौ नामधेयत्वेन परिभाषितौ । अथ विसर्गसमुन्नीतस्य विचित्रस्य संसारस्य सामान्यदृष्ट्या विषयमाह—संसारिण इति ॥ ९ ॥

पशुजीवपरमशिवाः सामान्याः न तावत्संसारिण एवेति प्रदर्शितम् । इदानीं पश्वादीनां विविच्य संसारविशेषाविषयतामुपदर्शयति—द्वैतात्मकं भवतीति । तत्र विसर्गपर्यायस्य विमर्शस्याविद्यारूपेण भेदचमत्कारोन्मीलनादिति भावः । तत्संसरणं अभवस्य शिवस्य संबन्धि अद्वैतरूपं, तत्र विमर्शात्मकविद्यारूपेणाऽभेदचमत्कारपरिग्रहात् तथात्वमित्यवगन्तव्यम् । परस्य शम्भोः संसरणमित्यनुवर्तते । मिश्रं द्वैताद्वैतरूपं तत्र विद्याविद्योभयरूपिण्या विमर्शशक्तेर्योगपद्येन भेदाभेदैकरहस्यप्रदर्शनचमत्काराभ्युपगम इति वेदितव्यम् । अत्र तृतीयकक्ष्यायां परशम्भुपदोपादानेन त्रिकाविश्रान्तिसिद्धान्तेऽपि बहुमतिरुपसूचिता । तस्यापि तृतीयपदाधिष्ठातृसंसारेषु परिगणनं चतुष्टयार्थमतश्रद्धया कृतम् । अतः संसारकलङ्कास्पृष्टं शुद्धान्तर्मुखाविश्रमस्वभावं

मिश्रं त्रिरूपमपि संसरणं यतः स्या-
द्विश्रान्तिभाक्तदिह धाम परं हि बिन्दुः ॥१०॥
गौणो हि बिन्दुरिति वित्तिरभेदरूपा
शैवी तनूर्भवति भेदपदं तु वेद्यम् ।

---

महाबिन्दुपदं विवेचयति—त्रिरूपमित्यादि । यतः यत्रेति रूपमपि संसरणं विश्राम्यति । तत्परमनुत्तरं धाम बिन्दुरिति निष्कृष्टमिति भावः । यद्यपि चतुर्थकक्ष्यायाः सर्वसंसारोपादानभूतपूर्णविमर्शस्वभावतया महाविश्रान्तिपदत्वं तथापि कक्ष्यात्रयोदश्वितप्रपञ्चकलकलानुसंधानगन्धो नोपशान्त इति तदुत्तीर्णं पञ्चममेव परव्योमलक्षणं पदं पञ्चमाम्नायपरिशोधितं निष्कलमहाबिन्दुतत्त्वमिति तात्त्विकसिद्धान्तः । अत्रैतदुद्दिष्टं भवति । यत्पशोः सुषुप्त्याद्यवस्थात्रयं भेदरूपं अथवा भेदरूपायां शैवीतुर्यदशायां च तदतीतदशा । एतस्मिन्स्वरस्पर्शादिभिर्मन्त्रैः अभिधीयत इति प्रतिपादिते दशापञ्चके भेदाभेदमिश्रसंसाररूपास्तिस्रो दशाः सर्वसंसारैकैकविश्रान्तिरूपा चतुर्थदशानां योगः तुर्ये चतुर्थदशायां योगः तदतीते महाबिन्दुदशायोग इति तद्विवेकः । त्रिविधसंसारतदेकरसमिश्रमतादुत्तीर्णमहाविश्रमदशासु सर्वमपि दशाजातमन्तर्भूतमिति सिद्धजनघण्टापथः । अतोऽयमुपदेशो मनीषिजनहृदयङ्गम इत्यलमतिप्रसङ्गेन ॥ १० ॥

उक्तन्यायेन बिन्दोरपरिच्छेदलक्षणत्वाच्छिवस्य विकल्पस्पृष्ट्या परिच्छेदसंभवेन बिन्दुलक्षणस्यासमग्रत्वेऽपि गौणन्यायेन बिन्दुव्यवहारोऽङ्गीक्रियते इत्याह—गौणेत्यादि । वृत्तिः संवित्तिः अभेदरूपा । इदं विशेषणं गौणबिन्दुव्यवहारहेतुभूतगु-

जीवस्य संवरकमस्य ततः स्वरूपं
सर्गैर्भवेद्यवहृतिर्महतामितीयम् ॥ ११ ॥
चैत्यं विमर्शपरिणामदशाविमर्श-
श्चिद्धर्म एष च चितो जननाल्लयाच्च ।

---

णगर्भितमभेदरूपत्वं गुणः, तद्वत्तया गौणो बिन्दुर्भवतीति विशेषः । सा वित्तिः शैवी शिवसंबन्धिनी तमः स्वरूपं भवति मिश्रसंसाराधिष्ठातुरप्येवं बिन्दुत्वमूहनीयम् । व्यवहारबाहुल्याभिसन्धिना शिवस्यैवोक्तं बिन्दुत्वमिति वेदितव्यम् । एवं पशोरपि परिच्छेदे सत्यपि चिद्रूपतया बिन्दुत्वं प्राप्तमेव । अथ तस्य चैत्यव्याप्ततया विसर्गत्वमपि संभावितमित्याह—भेदपदमित्यादि । भेदपदं भेदस्थानं वेद्यं, 'तु' शब्दो वित्तिस्वरूपाच्छिवाज्जीवस्य भेदमवगमयति । जीवस्य संवरकं, तत एवास्य स्वरूपं, यद्यस्य संवरकं तत्तस्य स्वरूपमिति भावः । वेद्यमपि भेदस्य संवरकं व्यापकं ततस्तस्य स्वरूपं भवतीत्यर्थः । अतो वेद्यरूपतया जीवस्य वेद्यवद्विसर्गशब्दव्यवहारविषयो भवेदित्यर्थः । महतां मन्त्रसमयविदामिति । इयमुक्तप्रकारा व्यवहृतिः व्यवहारः ॥ ११ ॥

अथ पशुशिवपदयोः वेद्यवेदकान्योन्यकवलनमित्युक्तं, तत्र किं निमित्तमित्याकाङ्क्षायामाह—चैत्यमित्यादि । शिवशक्तिपर्यायप्रकाशविमर्शपरिणामो जगदिति रहस्यागमसिद्धान्तः । यद्यपि विमर्शस्यैव विलासो जगदित्यङ्गीकृतं पुरातनैः तथापि विमर्शस्य प्रकाशमन्तरेण स्वरूपासिद्धेर्विमर्शो जगदाकारेण विलसन्नपि तत्र जगति प्रकाशांशमर्धेनावभासयति अर्धेन निजांशं, तत्र वेदकः प्रकाशांशः वेद्यं विमर्शांशः । एवं सति वेद्य-

नास्त्येव सा चिदपि यद्यविमृष्टरूपा
धर्मस्ततो भवति चिच्च विमर्शशक्तेः ॥ १२ ॥
चिच्चैत्ययोरिति समे सति धर्मधर्मि-
भावे परस्परपदाक्रमणं स्वभावः ।

---

पर्यायं चैत्यं विमर्शपरिणामदशा तत्पर्यालोचने विमर्श एव । एष च विमर्शः चिद्धर्मः प्रकाशस्य धर्मः । कुतः—चितो जननात् लयाच्च, यतः प्रकाशादेवोदेति तत्रैव विलीयते च, ततः सर्वस्यापि वस्तुनः स्फुरणेन विना सत्ताभावात् स्फुरणस्य तु प्रकाशाधीनत्वात् प्रकाशकारणकत्वमवश्यमङ्गीकार्यम् । किञ्च, शब्दरूपस्य विमर्शस्य गगनादुदयो गगन एव लयः सम्भावितः, तदेव गगनं प्रकाश इत्यलङ्कृतादि कारुण्युपदेश्ये प्रतिपादनलम्पटेन(?)। अथान्यस्मिन्पक्षे प्रकाशोऽपि विमर्शस्य धर्म इत्याह-नास्त्येवेति। सा चित्प्रकाशोऽपि यद्यविमृष्टरूपा इयमीदृशीति विमर्शेन अनिर्दिष्टस्वरूपा चेत् नास्त्येव इदमीदृगित्यविमृष्टस्यापि वस्तुनः सत्तायां शशविषाणादेरपि सत्त्वं प्रसज्यते । ततः सर्वमपि वस्तु कोट्यधिरोहे विमर्शमपेक्षत इति प्रकाशस्यापि सत्त्वे विमर्शकारणकत्वेन विमर्शधर्मत्वमवश्यमङ्गीकर्तव्यमित्याह —धर्मस्ततो भवतीत्यादिना ॥ १२ ॥

प्रकाशविमर्शयोरन्योन्यधर्मधर्मिभावप्रवचनस्य प्रकृतोपयोगमाह-चिच्चैत्ययोरित्यादि । इति उक्तप्रकारेण चिच्चैत्ययोः धर्मधर्मिभावे समे सति परस्परपदाक्रमणं स्वभावो नैसर्गिको व्यापारो भवति। धर्मिणो धर्मपदव्याप्तौ चित्त्वादिति भावः । चिच्चैत्ययोरन्योन्याक्रमणैका वा दशा सम्भाव्यत इत्यत्राह—चै-

चैत्यावृता भवति चित्पशुरेष चैत्य-
मावृण्वती चिदपि याति शिवप्रसिद्धिम् ॥ १३ ॥
चिच्चैत्ययोः समतया स्तिमिते स्वभावे
मिश्रं तु मध्यमपदं परशम्भुरूपम् ।

---

त्यावृतेत्यादि । चैत्यावृता चित् एष पशुर्भवति एष इति पुरो निर्देशेन स्वशक्तिप्रमोषपरिप्राप्तं दीनभावं निदर्शयति अथ चैत्यमावृण्वती व्याप्नुवन्ती चित् शिव इति प्रसिद्धिं याति ॥ १३ ॥

इदानीं चिच्चैत्ययोः समव्याप्तिपदस्य तृतीयतत्त्वस्य स्वरूपं विप्रतिपत्तिविषयतया सम्यगुपदिशति–चिच्चैत्ययोरित्यादि । चिच्चैत्ययोः समतया समव्याप्तिकत्वेन स्वभावे स्तिमिते निश्चले सति विश्रान्तिस्वभावावगाहितया निश्चलं तन्मध्यमपदं मिश्रमिति व्यवह्रियमाणमिति शम्भुरूपं भवतीति शेषः । 'तु' शब्दः शिवजीवाभ्यां भेदाभिधायकः, मध्यमपदमित्यनेनास्य पदस्य तृतीयत्वेऽपि शिवजीवोभयस्वभावतया सन्धित्वाच्चित्वेन मध्यमत्वमप्यङ्गीकृतमित्युपदिष्टं प्रवृत्तिनिवृत्तिरूपयोर्जीवशिवव्यापारयोरेककालीनत्वपर्यालोचनायामन्योन्याभिहननादन्योन्यव्यापारवेगोपक्षये निर्व्यापारदशैव समव्याप्तिपदत्वेन सम्भाव्यते, सैव स्तिमितदशोभयमूलतयोभयपक्षव्यापिनी पक्षद्वयगतविशेषस्वाम्यं लभते । यथा बहुविटपमूलपदभूता तरुशाखा विटपसम्बन्धिषु पुष्पफलादिषु स्वत्वं भजति तरुशाखेयं पुष्पिता फलिता तद्वत् । तदेवंरूपेणैव मिश्रपदप्रमातुः शिवजीवव्यापारयौगपद्यानुसन्धानं न तु विकल्पकक्ष्याधिरोहेण शिवजीववत् । तथात्वे तृतीयपदव्यवस्थितस्य महातत्त्वस्य शिवजी-

चिच्चैत्यमिश्रणतया तदयं त्रिरूपो
धर्मी च तत्तदुचितश्च तथा विमर्शः ॥ १४ ॥
चितिश्च चैत्यमपि तच्च विमर्शतत्त्वं
ज्ञानक्रिये न हि तयोः परमार्थभेदः ।

---

वपङ्क्तौ तत्सार्थक्येन व्यापारान्तराङ्गीकारलम्पटे शिवजीवस्वभावानुप्रवेशवैभवस्याप्यभावात् तदुभयापेक्षया दाक्षिण्यमूल एवोत्कर्षोऽपि स्यादित्यलमसामयिकविवादाग्रहेण । तदत्रायं विप्रतिपत्त्या वार्ता नोपकर्तव्य(?) इति प्रमेयतात्पर्यमुक्तम् । जीवादिस्वरूपं त्रैविध्यनिगमनद्वारेण दृढीकुर्वन्नाह—चिच्चैत्येति । मिश्ररूपतत्त्वेन अयमपरोक्षभूतो धर्मी द्वैतानुसन्धानरूपो विमर्श एवात्र धर्मः तद्वान् प्रमातेति यावत् । त्रिरूपः मन्त्रव्यवहारबाहुल्याद्दृष्ट्या त्रैरूप्यमुक्तं न तु चतुर्थपञ्चमदशयोरनन्तरोक्तधर्मस्य द्वैतादिरूपस्य विमर्शस्य त्रैविध्यात् धर्मित्रैविध्यमित्यभिप्रेत्याह—तत्तदुचितश्चेति । औचित्यं जीवस्य द्वैतविमर्शः शिवस्याद्वैतविमर्शः परमशिवस्योभयात्मकविमर्श इति ॥ १४ ॥

एवमत्र विषयोपयुक्तं शिवरूपं शिवस्य जीवत्रयस्वरूपं स्फुटतरमुपपाद्य तदत्यन्तोपयुक्तं ज्ञानक्रियास्वरूपं व्युत्पादयति—चितिश्चेत्यादि । चिदेव चितिः, सा च अभेदरूपं खलु ज्ञानं, घटो ज्ञात इति भिन्नेष्वपि घटपटादिष्वेकरूपत्वेनाभिन्नतयानुभूयमानत्वात् । भेदरूपा खलु चैत्यरूपिणी क्रिया चैत्यानां घटपटादीनामन्योन्यव्यावृत्तस्वरूपतया भेदरूपेणानुभूयमानत्वात् । एवं चिच्चैत्यरूपयोः ज्ञानक्रिययोः पारमार्थिको न भेद इत्याह—न हि तयोरित्यादि । चिच्चैत्ययोर्योऽयं भेदावभासः स न तु

ज्ञानं गृहीतकाठिनत्वगुणं क्रिया स्या-
ज्ज्ञानं भवेद्विरलिमाश्रयिणी क्रियैव ॥ १५ ॥
ज्ञानस्य सिध्यति विना क्रियया न रूपं
तस्यास्तथैव न हि तेन विनोपलम्भः ।

---

मायापर्यायविपर्ययज्ञाननिबन्धन इत्यभिप्रायः । तत्त्वभेदश्चिच्चैत्य-योरित्यत्राह-ज्ञानमित्यादि । ज्ञानं प्रकाशः गृहीतकाठिनत्वगुणं विमर्शाकारेणेति भावः। आकाशस्य काठिन्यं शब्दः तदा चिदा-काशस्य काठिन्यरूपो विमर्श इति प्रकाशविमर्शयोः जलकरक-योरिव न वास्तवो भेद इति तात्पर्यम् । ननु प्रकाशविमर्शयोः जलकरकयोरिव भेदो मास्तु चैत्यात्मिकत्वेन घटपटादिनाना-रूपायाः क्रियायाः ज्ञानरूपात्प्रकाशाद्भेदो दुरपन्हवः। वर्णरूपा-द्विमर्शादपि पृथुबुध्नोदराद्याकारतया घटपटादयो भिद्यन्त एवेति चेद्घटपटादिनः सर्वस्यापि वस्तुनो घटपटादिशब्दरूपविमर्शा-तिरिक्तं न किञ्चिदपि स्वरूपं विवेकदशायामवतिष्ठत इति गुरु-कटाक्षपरिक्षपितमायान्धकारैः सुप्रतिपन्नत्वात् ज्ञानाभेदं क्रिया-याः प्रतिपाद्य क्रियाया अभेदं ज्ञानस्य प्रतिपादयति-ज्ञानं भवेदित्यादि । सापि विमर्शरूपिणी क्रिया विरलिमाश्रयिणी काठिन्यपरित्यागेन विश्रान्तिलक्षणं विरलिमानं परिगृण्हाति । ज्ञानं भवेत्प्रकाशैकरस्यं प्राप्नोतीत्यर्थः। एवं ज्ञानस्य बहीरूपं क्रिया क्रियाया आन्तरं रूपं ज्ञानमिति तयोरेकार्थत्वमिति निष्कर्षः ॥ १५ ॥

अथ शिवशक्तिस्वरूपयोः ज्ञानक्रिययोस्तुल्यप्राधान्यतया यौगपद्यसिद्धिसंप्रतिपत्तिमूलयामलसिद्धान्तं मन्त्रहृदयभूतत्वेन

तस्मात्तयोर्यमलतैव मतं हि सिद्धं
पूर्वापरत्वकलनं त्विह पूर्वपक्षः ॥ १६ ॥
अर्धं क्रिया भवति दक्षिणमन्यदर्धं
ज्ञानं समत्वमनयोरपि मध्यमिच्छा ।

---

सिद्धाभिमतं प्रतिबोधयन्नेतन्मताभ्युपगममूलभूतं प्रकाशविमर्शपर्यायज्ञानक्रियान्योन्यकारणकत्वं प्रागुक्तमेवानुवदति—ज्ञानस्येत्यादिना । हि यस्मात् क्रियया विमर्शेन विना ज्ञानस्य प्रकाशस्वरूपं न सिध्यति तथैव तस्याः क्रियायास्तेन ज्ञानेन विनोपलम्भनासिद्धिः, तस्मात्तयोर्ज्ञानक्रिययोर्यमलता युगपत्सिद्धतैव सिद्धं सिद्धसंम्बधि मन्त्रहृदयत्वादिति भावः । इह ज्ञानाक्रियासिद्धिविचारविषये पूर्वापरत्वकलनं तु पूर्वपक्षः, वेद्यवेदकाकारेण प्रकृतिपुरुषाकारेण देहात्माकारेण शब्दार्थाकारेणैव पर्यायप्रकारान्तराकारेण वा क्रियाज्ञानयोः सिद्धेः पौर्वापर्याभ्युपगमः पूर्वपक्षत्वमेव भजति निर्वोढुमशक्यत्वादिति तात्पर्यम् ॥ १६ ॥

इदानीं ज्ञानक्रिययोरन्योन्याविनाभावस्वभावतैकस्वरूपसम्बन्धौचित्ययोः तत्समष्टिरूपयेच्छया समस्त्रीपुमुभयस्वभावतया रहस्यविद्भिरविमतस्य परमशिवतत्त्वस्य स्वरूपभागत्वाभिप्रायेण एकस्वरूपसंम्बन्धं दर्शयति—अर्धं क्रियेत्यादि । क्रिया दक्षिणमर्धं भवति शिवस्येत्यभिप्रायः । कर्मकाण्डस्य दक्षिणमार्गतयाङ्गीकारादियं व्यवस्था । ज्ञानमन्यद्वाममर्धं ज्ञानकाण्डस्य वाममार्गत्वेनाङ्गीकारादिति भावः । ननु शैवं दक्षिणाचारः शाक्तं वामाचार इति सिद्धजनप्रतिपादात् क्रिया विमर्शरूपत्वाच्छक्तिस्वरूपमित्यङ्गीकर्तव्यम्, ज्ञानं प्रकाशरूपत्वात् शिवस्वरूपमिति च, तत्कथं

इच्छैव बीजमचलान्तरबाह्यगत्या
ज्ञानं क्रिया च खलु मूलमिहाङ्कुरश्च ॥ १७ ॥

———

क्रियाया दक्षिणत्वं ज्ञानस्य वामत्वमिति चेत्; सत्यं, रहस्यसमयसारावबोधकसद्गुरुसपर्याविधुराणामयं विप्रतिपत्तिषु सङ्कटो दुरतिक्रमः महागुरुकटाक्षशिवतां (?) तु निराकृत्यात्र विवेचयति तदुपदिश्यते ज्ञानाक्रियारूपयोः शिवशक्त्योरन्योन्यानुरागेणान्योन्यस्वभावोपरक्तस्वभाव इति वेदितव्यम्। शिवस्य स्वभावो ज्ञानं जडाकारया क्रिययोपरक्तं सत् जडस्य शुक्लतया शुक्लं भवति। शक्तिः स्वभावः क्रिया अजडेन ज्ञानेनोपरक्ता सती अजडस्य रवेः ऋतुतया अरुणा भवति। तदुभयमिश्रं तद्रूपमुभयवर्णसंसर्गाच्चिदं हेमनिभं भवतीति शिवादिस्वरूपत्रयपर्यायशाम्भवोक्तचरणत्रयवद्वर्णवासनाप्येवमनुसन्धेया । तदेवं ज्ञानरूपोऽपि शिवः शक्तिस्वभावक्रियास्वरूपानुसन्धानैकव्यापारतया ज्ञानमार्गे वामाचारे व्यवस्थापितेति (?) कौलिकोपनिषत्। तदेतत्प्रमेयं ज्ञानक्रिययोर्वामदक्षिणार्धत्वोपन्यासद्वारेण सूत्रकृता व्युत्पादितं, ज्ञानक्रियामिश्रपदे स्वेच्छया भागव्यवस्थामाह —समत्वमनयोरिति। अनयोर्ज्ञानक्रिययोः समत्वं समव्याप्तिकत्वं यत्तदिच्छेति इच्छालक्षणं चात्रानुसन्धेयम्। मध्यमिति। दक्षिणवामयोर्मध्यमित्यर्थः। इच्छातत्त्वस्य प्राक्प्रतिपादितपरशिवस्वभावस्य ज्ञानाक्रियात्मकपक्षद्वयमूलरूपतया तदुभयबीजत्वं समर्थयति- इच्छैव बीजमित्यादि। एवकारेण पक्षत्रयस्यापि ज्ञानं च कर्म चेत्यादिवक्ष्यमाणत्रिमूर्त्यात्मकत्वप्रतिपादनेन यद्यप्यन्योन्यमूलत्वमुपपत्तिमत्, तथापि माध्यमिकतया सुषुम्नापर्यायभूताया इच्छाया एव प्रे-

ज्ञानं क्रिया तदुभयैकरसापि चेच्छा
तत्त्वत्रयं भवति नित्ययुतस्वभावम् ।
ज्ञानस्य मानमिति मेयमिति क्रियाया
मातेति चेतरपदस्य हि नामभेदाः ॥ १८ ॥

—————

क्षात्रन्महायोगिभिरुररीकृतं ज्ञानाक्रियारूपत्वमित्युपदिष्टम् । इच्छैवाचला प्राक्प्रतिपादितमर्यादया स्तिमितस्वभावा । इदं च विशेषेण बीजत्वसमर्थकम् । बीजं हि निश्चलं तिष्ठति मूलाङ्कुरावेव अन्तर्बहिश्च प्रसरतः । आन्तरगत्या निवृत्तिरूपप्रसरणेन ज्ञानं मूलं बीजस्याधोभागप्रसृतवान् रोहावयवः, बाह्यगत्या प्रवृत्तिरूपप्रसरणेन क्रिया इह बीजे अङ्कुरः । चकारः समुच्चयाभिधानेन बीजस्य पूर्णं लक्षणत्वमभिधत्ते ॥ १७ ॥

इच्छाज्ञानक्रियाणां प्रमात्रादिभिरेकार्थतया प्रमातृप्रमाणप्रमेयशब्दव्यवहारोऽपि भवतीत्याह—ज्ञानं क्रियेत्यादि । ज्ञानं क्रिया तदुभयैकरसा तदुभयसमष्टिरूपा इच्छा च इति तत्त्वत्रयं नित्ययुतस्वभावं भवति अन्योन्याविनाभूतं भवति । एतद्विशेषणं त्रिपुटीरूपतया नित्ययुतस्वभावेभ्यः प्रमात्रादिभ्य इच्छादीनां सादृश्योक्तिद्वारेणैकार्थताप्रतिपादकम् । इच्छादीनां प्रमात्रादिषु कस्य केनैकार्थतेत्याकाङ्क्षायामाह ज्ञानस्येत्यादि । ज्ञानस्य मानमिति क्रियाया मेय इति इतरपदस्य ज्ञानक्रियाभ्यामितरस्य पदस्य इच्छाया इत्यर्थः । मातेति च नामभेदात्संज्ञाभेदः ससंज्ञकानामिच्छादीनां प्रमात्रादीनां च पर्यालोचने भेद इति भावः ॥ १८ ॥

विश्रान्तमात्मनि पराह्वयवाचि सुप्तौ
विश्वं वमत्यथ विबोधपदे विमर्शः ॥ १ ॥
वाणी परा खलु ऋकारऌकाररूपा
सङ्कोचगन्धसहिता गगनेऽपि सुप्तौ ।

---

विश्वस्य विमर्शगर्भ एव स्थितिरुद्दिष्टा । तद्विलासरूपत्वात् विमर्शविला एव । विश्वं सविलासः सुषुप्तिदशायां परावाग्रूपेण विश्रान्तितत्त्वलीने विमर्शे स्वयमपि निलीनः प्रबोधपदे अन्तर्बाह्येन्द्रियात्मना स्फुटस्वरूपस्य विमर्शस्य गर्भान्निःसरतीति भावः ॥१॥

विमर्शपरावाग्रूपेण सुषुप्तिर्विश्रान्तौ तिष्ठतीत्युक्तम् । प्रमेयप्रमाणप्रमातृरूपे अकाराद्युकारान्तविश्रान्तिपदे परस्या वाचः किं स्थानं कः स्वभाव इत्यत्राह—वाणीत्यादि । परा वाणी ऋकारऌकाररूपा खलु अनेन परावाग्रूपस्य विमर्शस्य प्रमाणत्वमुक्तम् । व्युत्थानपदेऽपि विमर्शः प्रमाणरूप इति वेदितव्यम् । प्रमाणरूपाणामिन्द्रियाणां अनुसन्धानरूपत्वादनुसन्धानस्य विमर्शरूपेण पर्यवसानादिन्द्रियाण्येव विमर्शस्य स्वरूपमिति निष्कृष्टो विवेकः । ऋकारऌकारात्मनः प्रमाणस्य परावाक्तत्त्वविमर्शरूपतायामुपपश्यन्तरमासां सङ्कोचयति । गगनेति सामान्यरूपायामपि सुप्तौ पूर्णस्वभावायामिति भावः । सङ्कोचगन्धसहिता ऋकारऌकारयोरिकारोकारापेक्षया सङ्कोचभावः प्रतीयते । व्यञ्जनवर्णेष्विव स्थौल्यानुभवात् । ननु परावाचो विमर्शस्य सङ्कोचः स्वभावश्चेत् तदानीं खलु सङ्कोचभावोपलक्षित—ऋकारऌकारात्मकप्रमाणत्वोपपत्तिरिति परावाचो विमर्शस्य सङ्कोचस्वभावतामुपपादयति—सङ्कोचेति । चिदचिद्गगनस्य चिदचित्सामरस्यरूपस्य गगनस्य

सङ्कोच एव चिदचिद्गगनस्य वाणी
तद्व्योम सङ्कुचति च प्रकृतौ विमर्शे ॥ २ ॥
धर्मे स्वके स्वरसवाहिनि वाक्स्वरूपे
लग्नं परं गगनमप्युपयाति सत्ताम् ।

---

विश्रान्तिः सङ्कोच एव । वाणीविमर्शदशायां विश्रान्तस्वभावः पूर्णतयाऽनुभूयते । स एव स्वभावो यथानुसन्धानभूमिकां प्रतिगृह्णाति तथा ग्राह्यग्राहकोभयाभासात्मकविमर्शरूपेण सङ्कुचति । गगनस्य शब्दाकारेण खलु सङ्कोचः । विश्रान्तिरूपस्य गगनस्य शब्दरूपविमर्शानां सङ्कोच इत्युपपन्नम् । ननु पूर्णतया स्थितं तद्विश्रान्तिगगनं कुतो हेतोर्विमर्शात्मना सङ्कोचभावं प्राप्नोतीत्यत आह—तद्व्योमेति । तद्व्योम विश्रान्तिगगनं विमर्शे प्रकृतौ स्वभावे सति सङ्कुचति । विमर्शात्मना सङ्कोचभावपरिग्रहो विश्रान्तिःतत्त्वस्य स्वभावः न कश्चिदप्यत्र हेतुरिति भावः ॥ २ ॥

इदानीं कार्यरूपजगद्बीजस्य विमर्शस्य कारणरूपजगद्बीजत्वमपि प्रतिपादयन् महत्त्वतां व्युत्पादयति । धर्म इत्यादि—स्वरसवाहिनि स्वत एव प्रवहणशीले न त्वन्यप्रेरणया, तथात्वे तस्यापि प्रेरकस्य प्रेरणसङ्कल्परूपं विमर्शं विना प्रेरणानुपपत्तेः तस्यापि विमर्शस्य विमर्शान्तरं विनाऽप्रवहणमित्यनवस्थया विमर्शस्य पर्यन्ततया स्वरसवाहित्वमङ्गीकार्यम् । अतः स्वरसवाहिनि वाक्स्वरूपे चिद्धर्म एव च चितो जननलयाश्चेति प्राक्प्रतिपादितमर्यादया धर्मे विमर्शस्वरूपे स्वके धर्मे लग्नं सत् परं गगनमपि चिदचित्सामरस्यरूपं विश्रान्तितत्त्वमपि सत्तामुपयातीति विमर्शसीमानुप्रवेशाभावात् । नास्त्येव सा चिदपीति प्रागुक्तक्रियया

सत्त्वाय नित्यमुपगूढविमर्शतत्त्वं
तद्धर्मतां गगनमप्युपयाति चित्रम् ॥ ३ ॥
तस्मात्परैव जननी समुपासनीया
व्योम्नः परस्य गतजाड्यमियं हिरूपम् ।

---

विश्रान्तितत्त्वस्यापि स्वरूपासिद्धेः । अतः सत्त्वाय सत्तासिद्धये नित्यं नियतं उपगूढविमर्शतत्त्वं आलिङ्गितविमर्शतत्त्वं गगनमपि चिदचित्सामरस्यरूपं विश्रान्तिगगनमपि तद्धर्मतां तस्य विमर्शस्य धर्मतामुपयाति । चित्रं अन्योन्यधर्मधर्मित्वमद्भुतमित्यर्थः । प्राक्प्रतिपादितोऽयमर्थः विमर्शस्य सर्वप्रकारजगन्मूलत्वप्रवचनप्रस्थाने विमर्शप्रभावव्युत्पादनायाऽनुस्मृत इति निरवद्यम् ॥३॥

अतः सर्वमूलतया विमर्शतत्त्वमेवोपासनीयमित्याह—तस्मादित्यादि। तस्माद्विश्रान्तेरपि मूलत्वात् कारणत्वात् जननी सर्वमूलत्वात् सर्वमातृका परैव विमर्शशक्तिरेव समुपासनीया। एवकारः पर्यालोचितो वाऽस्य निर्णयमभिधत्ते। तामेव पर्यालोचनामुद्घाटयति व्योम्न इत्यादि। परस्य व्योम्नः उपास्यत्वेन संभावितस्येति भावः। गतजाड्यं निर्विमर्शतया सम्भावितजाड्यशङ्काव्यपेतं रूपम्। इयं हि खलु परावाक् चेतनरूपतयोपास्यत्वेनाऽभिमतस्य परमगगनस्य चैतन्यकलास्थानम्, अत एवाऽव्यक्तचैतन्यादंशात् अभ्यर्हितेति भावः। अनेन विमर्शस्य प्रकाशैकात्म्यमुपपादितम्। विमर्शस्य परमोपास्यत्वकथनात्तदात्मकस्य प्रमाणतत्त्वस्य विशेषेण उपास्यत्वमुपपादितम्। अयमर्थो महायन्त्रप्रथमोपासनायोग्यप्रमुखपदचतुरस्ररूपस्य प्रमाणचक्रस्य सन्निवेशादभिव्यक्तः उपास्यत्वेन व्युत्पादितस्य विमर्शस्यैवोपासनाप्रवृत्तिमूलं

बध्नाति चैषमिदमंशसमुच्छ्रयेण
जन्तून् विमोचयति चोन्नमिताऽहमंशात् ॥ ४ ॥
त्रेधेदमित्यहमिति स्फुरणात्मिकाया-
स्तस्याः स्वरूपमुभयांशसमाऽसमत्वे ।

---

बन्धमोक्षैककर्तृ प्रतिपादयति बध्नातीत्यादि । इयमेव विमर्श-रूपिणी परा इदमंशसमुच्छ्रयेण स्वस्वरूपोभयभागयोर्भेदाभेद-रूपयोरिदमहमंशयोर्मध्ये इदमंशसमुच्छ्रयेण जन्तून् बध्नाति । सर्वत्र वस्तुनि इदमाकारप्रतीतौ देहमात्रेऽप्यहमाकारप्रतीतौ सं-वोच्छ्रितेतदन्ताप्रतीतिः खलु बन्धः । उन्नमिताऽहमंशाज्जन्तून् विमोचयति च । इदंप्रतीत्यन्यथाभावेन सर्वत्राऽहन्ताप्रतीत्यौ-ल्बण्यमेव च मोक्ष इति भावः । अनयोर्बन्धमोक्षयोर्विमर्शरूपिणी पराशक्तिरेव मूलं, स्वरसवाहिनी खलु परा यस्य यस्यहृदये इद-न्तौल्बण्येनाऽहन्तान्यग्भावेन प्रवहति स स बद्धो भवति, यस्य यस्य हृदये अहन्तौल्बण्येन इदन्तान्यग्भावेन प्रवहति स स मुक्तो भवतीति भावः ॥ ४ ॥

पूर्वसूत्रेण इदमहमात्मकौ प्रत्ययौ विमर्शरूपिण्याः परायाः स्वरूपे उभौ भागाविति सूचितं अनेन सूत्रेण तमेवार्थं स्फुटी-करोति—त्रेधेत्यादि । इदमित्यहमिति यत् स्फुरणद्वयं तदा-त्मिकायाः तस्याःपरायाः स्वरूपं त्रेधा भागत्रयविशिष्टत्वादिति भावः । के ते भागा इत्यत्राह उभयांशेत्यादि । इदमित्यहमिति स्फुरणरूपयोरुभयोरंशयोः समासत्वेन त्रिधेत्यन्वयः । इदमह-मंशयोः साम्यमेको भागः तयोरसमत्वे इदमिति स्फुरणोल्बण-तायामेको भागः अहमिति स्फुरणोल्बणतायामन्यो भाग इति

तद्धर्मसङ्गतिवशेन तथा त्रिरूपो
धर्मी च चैत्यचितिमेलनसिद्धरूपः ॥ ९ ॥
विश्रान्तिधामनि निजाश्रययोर्विमर्श-
श्चिच्चैत्ययोर्भवपदे स्वयमाश्रयोऽपि ।

---

तौ द्वौ भागौ समत्वभावेन सम्भूय त्रयो भागाः । अत्रापि जडाजडसाम्यानामिव भागकरणं विना प्रत्येकं सर्वसन्निविष्टानां समत्वादिस्वरूपाणामंशत्वमुपचारः । एवं धर्मरूपं विमर्शं पर्यालोच्य प्रक्रियासाम्येन प्राक्प्रतिपादितस्यापि धर्मिणस्त्रैरूप्यमनुस्मरति तद्धर्मेत्यादि । तद्धर्मसङ्गतिवशेन उक्तनवीनत्रिरूपस्य तस्य विमर्शात्मनो धर्मस्य संसर्गवशेन धर्मी च तथा त्रिरूपः त्रैरूप्योपलक्षितं धर्मिणं प्रदर्शयति चैत्येति । चैत्यचितिमेलनासिद्धरूपः व्याप्तिमता चैत्येन व्याप्तिमत्या चिता तदुभयमेलनेन सिद्धस्वरूप इत्यर्थः । इदन्तोल्वणविमर्शसङ्गतिवशात् व्यापकचैत्यरूपः धर्मी अहन्तोल्वणविमर्शसङ्गतिवशात् व्यापकचिद्रूपो धर्मो इदन्ताऽहन्तासाम्येन स्तिमितविमर्शसङ्गतिदशा चिच्चैत्यसापरस्यरूपो धर्मीति विवेकः ॥ ९ ॥

अथ सूत्रत्रयेण परमशिवभट्टारकस्वातन्त्र्यशक्तेर्विमर्शस्य निराधारविलसनचमत्कारान् प्रदर्शयति—विश्रान्तीत्यादि । विमर्शः कर्ता विश्रान्तिधामनि विश्रामपदे सुषुप्तावित्यर्थः । निजाश्रययोः चिच्चैत्ययोर्विश्रान्तेः निःशब्दतया विमर्शाश्चिच्चैत्ययोराश्रितो लीन इत्युपपन्नम् । भवपदे संसारपदे स्वयमाश्रयो भवपदस्य विकल्पमूलत्वाद्विकल्पस्य विमर्शत्वात्तत्र पदे प्रमात्रादिकः सर्वोऽप्यर्थो विमर्शमूल एवेति चिच्चैत्ययोः प्रमात्रोरपि विमर्शाश्रितत्वम् । तथा

एतद्द्वयं निजसमाश्रयमेव कुर्वन्
स्वैरक्रमेण विलसत्यबहिर्बहिश्च ॥ ६ ॥

स्वप्ने स्फुरत्यबहिरिन्द्रियमूर्तिरन्त-
र्बाह्ये बहिःकरणमूर्तिरथ प्रबोधे ।
सङ्कोचमाश्रयति पूर्वपदेऽत्र किञ्चि-
दत्यर्थमुत्तरपदे तु तमादधाति ॥ ७ ॥

---

धर्मिणोरप्याश्रयो विमर्श एतद्द्वयं चिच्चैत्यरूपं धर्मिद्वयं निजसमाश्रयमेव स्वमाश्रयमेव कुर्वन् अबहिः—अन्तः सीमायाम् । बहिश्च बहिःसीमायां च स्वैरक्रमेण बाह्यादभ्यन्तरं वा अभ्यन्तराद्बाह्यं वेति एवमादिभिः स्वरसप्रवहणक्रमै विलसति ॥ ६ ॥

स्वप्नेत्यादि । स्वप्ने अबहिरिन्द्रियमूर्तिर्मनोबुद्धिस्वरूपः, अन्त रभ्यन्तरकक्ष्यायां स्फुरति । जगद्रूपं स्वविलासं दर्शयतीति भावः । स्वप्नशब्दः प्रकृतिसंसारस्याप्युपलक्षक स्तत्रापि मनोबुद्धिरूपेण विमर्शस्य जगदुद्वमनात् । अथानन्तरं प्रबोधे सुषुप्तिनिवृत्त्या शुद्धजाग्रद्रूपे प्रबोधे बहिः कारणमूर्तिः श्रोत्रादिवागादिज्ञानाक्रियेन्द्रियस्वरूपः । बाह्ये बाह्यकक्ष्यायां स्फुरतीति संबन्धः । अत्र स्वप्नजाग्रद्रूपपदद्वये यत्पूर्वपदं स्वप्न स्तत्र किञ्चित्सङ्कोचमाश्रयति । सुषुप्तौ विश्रान्त्यैकरस्येन पूर्णस्य विमर्शस्य तदनन्तरपदे स्वप्ने ईषत्सङ्कोच स्तद्वशात् प्रमातृप्रमेययोरपि तथात्वम्, तमेव जाग्रत्सङ्कोचमाह उत्तरपदेत्विति । उत्तरपदे स्वप्नान्तरपदे जाग्रति अत्यर्थमतिमात्रं तं सङ्कोचमादधाति अङ्गीकरोति ॥ ७ ॥

सङ्कोचवर्त्तिसरसीमनि बाह्यरङ्गे
व्याप्तिं समर्पयति नान्तरधाम्नि पूर्णे ।
विश्रान्तिमर्पयति पूर्णतरामितोऽपि
माया चमत्कृतिमवाप्य जडो विमर्शः ॥ ८ ॥

---

पशोः संसारपदे विमर्शस्य मायाचमत्कारपरिग्रहेण विपरीतप्रतीतिरूपेण विलसनं दर्शयति—

सङ्कोचेति । सङ्कोचवर्तिपरसीमनि सङ्कोचभावपरमपदे बाह्यरङ्गे जाग्रत्पदे व्याप्तिं समर्पयति पूर्णतामारोपयति । घटपटादीनां प्रस्फुटं साक्षात्करणेन जाग्रत्प्रकाश एव पूर्ण इत्यनुसन्धत्ते । पूर्णे जाग्रदपेक्षया पूर्णे सङ्कोचस्य षण्मात्रत्वात् । आन्तरधाम्नि आन्तरकक्ष्यायां स्वप्न इत्यर्थः । अत्र व्याप्तिं पूर्णतां न समर्पयति स्वप्नप्रकाशस्य जाग्रत्प्रकाशादल्पत्वमनुसन्धत्ते । साक्षात्कृतानामपि घटपटादीनां जाग्रदुदये अन्तर्धानात्स्वप्नप्रकाशस्य निष्प्रकाशसुषुप्तिकल्पत्वमेवेति प्रतिपद्यत इत्यर्थः । इतोऽपि स्वप्नात् पूर्णतरामतिपूर्णां विश्रान्तिसुषुप्तिमितोऽपि स्वप्नादल्पमिति सङ्कोचपदं प्रतिपद्यते कस्यचिदपि घटपटादेरप्रतिपत्तेरिति भावः । एवं विमर्शस्य विपरीतप्रतिभाने निमित्तमाह—मायेत्यादि । माया चमत्कृतिमवाप्य जडः सन् विमर्श एव विपरीतरूपो भवतीत्यर्थः । न क्वचिन्माया विद्यानामतत्त्वम् । विमर्श एवेदन्तौल्वण्येन संभासमाना मायेत्युच्यते स एवाहंतौल्वण्येन भासमानो विद्येति व्यपदिश्यत इति वेदितव्यम् ॥ ८ ॥

इच्छाद्वयान्तरितमानयुगे यवर्गे
स्वाप्ने जडा खलु दशा समवेक्षणीया ।

---

इदानीमिच्छामात्रसंसारस्य सुषुप्तेरनन्तरं ज्ञानक्रियासंसारयोः स्वप्नजाग्रतोर्मध्येविसर्गप्रकरणत्वात् क्रियाप्राधान्येन यद्यपि जाग्रतः प्रथमविवेकाश्रितत्वं तथास्योत्पत्तिक्रियासृष्ट्या ज्ञानस्य प्रथमत्वात् ज्ञानसंसारस्य स्वप्नस्य प्रथमं विवेकमाचरमाण ईषत्सङ्कोचरूपां स्वप्नदशामीषत्सङ्कोचवति यवर्गे निरूपयति—

इच्छेति । इच्छाद्वयान्तरितमानयुगे स्वरपदप्रक्रियानुसारेण इकारोकारसङ्कोचरूपयोः यकारवकारयोः जडाजडेच्छात्वम्, तेन इच्छाद्वयेन अन्तरितं मध्येकृतं मानयुगम् । ऋकारऌकारसङ्कोचरूपरेफलकारात्मकं क्रियाज्ञानरूपं प्रमाणयुगं यत्र तस्मिन् यवर्गे जडा स्वाप्ने दशा जीवसंबन्धिनी भेदस्वप्नदशा समपेक्षणीया खलु यवर्गस्वप्नदशयो रीषत्सङ्कोचरूपयोः सादृश्ययोगादिति भावः । अत्र स्वप्ने लकारमूर्तेर्मनस एव प्रमातृत्वम् । लकारः खलु ज्ञानप्रमाणस्थानीयः । अन्तःकरणसंसारे स्वप्ने ज्ञानरूपं प्रमाणं मन एव न तु श्रोत्रादयो न तु स्वतन्त्राणीन्द्रियाण्येव निजानिजेषु विषयेषु प्रवर्तन्त इत्यनुभवः । मनसः किं स्वरूपं वेत्यत आह श्रोत्रादीनां बहीरूपमन्तरूपं चेति रूपद्वयं यथा (दा) श्रोत्रादयो बहिर्निमीलिता अन्तः प्रवर्तन्ते तथा (दा) श्रोत्रादीनामेव तथान्तरं रूपं मन इत्युच्यते, यदा बहिरुन्मीलिताः प्रवर्तन्ते तदानीं श्रोत्रादिव्यवहार इति विज्ञेयम् । अन्तः श्रोत्रादीनामन्तः पदे मन इति व्यावहारात् । ज्ञानेन्द्रियस्थानीयो लकारो मन एव एवं कर्मेन्द्रियस्थानीयो रेफो बुद्धिः कर्मेन्द्रियाणामभ्यान्तररूपं बुद्धिरि-

मातृत्वमत्र मनसो हि लकारमूर्तेः
स्वप्नो हि मानसिकसंसरणं प्रसिद्धम् ॥ ९ ॥
स्वस्यैव शक्तिरवमर्शमयी स्वगर्भे
ग्रस्तस्तयैव मनसा वपुरादिमूर्त्या ।

---

त्यवगन्तव्यम् । स्वप्ने मनस एव प्रमात्रादित्रिपुटीभावपरिग्रह-चमत्कारेण संसरणं न तु तात्त्विकदेहरूपस्य प्रमातुः तथात्वे स्वप्नानुभूतानामर्थानां जाग्रति सम्पातप्रसक्तेः । अतो मनस एव महाशक्तेर्विमर्शस्य त्रिपुटीरूपेण स्वप्ने विलसनं तस्यैव मनसो बहिरपि श्रोत्रादिरूपस्य विषयाकारेण विलसनमिति जगतो न कुत्रापि बहिरन्तर्वा विमर्शादन्यतः परमाण्वादेः सिद्धिरिति गुरु-कटाक्षनिरस्तमायान्धकाराणां सम्प्रतिपन्नम् । स्वप्नः संसारस्य तात्त्विकदेहप्रमातृकर्तृकत्वे जाग्रति तत्सम्पादौचित्यात्तत्संपादस्या-दर्शनात् स्वप्नो मनोविलास इति लौकिकस्यापि सम्प्रतिपन्नमिति तदपेक्षया स्वप्ननिर्विवादं मनस एव प्रमातृत्वमिति तथोक्तं तामे-वलौकिकसम्प्रतिपत्तिमुद्घाटयति—स्वप्नो हीति ॥ ९ ॥

इदानीं चित्तत्त्वस्यात्मनः स्वान्तस्थयैव विमर्शपर्यायया मनः-शक्तौ देहाद्यन्तःप्रपञ्च पृथिव्यादिबाह्यप्रपञ्चरूपिण्यां संवरणचम-त्कारं व्युत्पादयति—

स्वस्यैवेत्यादि । अवमर्शमयी विमर्शरूपिणी शक्तिः स्व-स्यैव । स्वसम्बन्धिन्येव । अस्याः स्थितिरपि स्वगर्भधर्मत्वात् मन-सा मनोरूपिण्या तयैव वपुरादिमूर्त्या देहपृथिव्यादिप्रपञ्चभूमि-कापरिग्राहिण्या ग्रस्तः व्याप्तः । अनेन प्रपञ्चेन अहंकवलित इति विमर्शस्यैव विपरीतप्रतीतिचमत्कारभावाद्ग्रसनचमत्क्रियाविषयः,

आत्मा स्वरश्मिपटलस्थगितोऽर्यमेव
नाभाति किञ्चिदपि कञ्चुकपञ्चकान्तः ॥१०॥
आत्मान्वितं वपुरहङ्कृति धीमनांसि
त्रीण्यान्तराणि करणानि पदं प्रमातुः ।

---

न तु परमार्थतो ग्रस्तः । विद्योदयानन्तरं स्वरूपपर्यालोचनायां स्वस्य प्रपञ्चेन कवलनं विमर्शचमत्कारमात्रे पर्यवस्यतीति स्वधर्मविलास एतेन कथं स्वस्यावरणमित्येतदुपमामुखेन समर्थयति-स्वरश्मीति । स्वरश्मिपटलेन स्थगितः छन्न अर्यमा सूर्य इव कञ्चुकपञ्चकस्य मनःशक्तिसमुन्मिषितपरिच्छिन्नसङ्कल्परूपवेद्यादिपञ्चाङ्गपदात्मनः । अतः व्याप्यकक्ष्यायां स्थित इत्यर्थः । नाभाति न प्रभाति । यथा सूर्यः स्वरश्मिपटलेनैवाच्छादितो न दृग्विषयबिम्बः तथायमप्यात्मा स्वशक्तिविलासेन । अत एव स्वरश्मिचक्ररूपेण प्रपञ्चेन च्छन्नोऽन्तर्हितचिदात्मकमूलरूप इत्युपपन्नमिति भावः ॥ १० ॥

अथ विसर्गव्याप्तिविषयतया सम्भावितपञ्चाङ्गकस्य स्वप्रपदस्य संस्थानमुपदर्शयन् वक्ष्यमाणप्रकृतेः संसारपदाद्भयमेदमुपपादयति--

आत्मेत्यादि । आत्मान्वितं वपुः आत्मना सह परिगणितं वपुः । अहङ्कृतिधीमनांसि अहङ्कारबुद्धिमनोरूपाणि । त्रीण्यान्तराणि करणानि । सम्भूय पञ्चाङ्गकम् स्वप्नरूपं प्रमातुः पदं पदमित्यस्मिन्नर्थे प्रमातुरात्मन एव स्वाम्यमुक्तम् । अस्य पदस्यात्मशक्तिर्मनोविलासरूपत्वादात्मविलासरूपत्वमर्थात्सिद्धमिति जाग्रति मानसिकमंसारूपं प्रकृतिपदं वक्ष्यमाणपवर्गरूपम् । तत्रा-

एतन्मनोविलसितं यदि पञ्चरूपं
मायापदं पदमिदं प्रकृतेस्तु साक्षात् ॥ ११ ॥
मायापदे स्वमन एव शरीरताभा-
गित्यादिशन्त्यणुविदोऽत्र वकारगर्भे ।

---

ध्यात्मा, वपुः पर्यायप्रकृतिः, अहङ्काराद्यन्तःकरणत्रयमिति पञ्चाङ्गं पदम् । तथा च प्रकृतिपदात् स्वप्नपदस्य को भेद,–इत्यत्राह एतदित्यादि । एतत्पञ्चरूपं पदं मनोविलसितम् । यदि मनस एव तात्त्विकदेहे प्रमातृनिर्व्यपेक्षस्य यदि विलसितं तदानीं स्वप्नपर्यायं मायापदं भवति, साक्षाच्चेदहमेवं स्मरामीति जाग्रत्प्रकृतिरूप प्रमातृमूलं चेत् प्रकृतेः–पदं भवतीति भावः ॥ ११ ॥

ननु स्वप्नपदं विसर्गव्याप्तिविषयतया पञ्चाङ्गकमित्युक्तम् । तत्र यकारादिवकारान्ताश्चत्वारो वर्णाः जडेच्छाप्रमाणद्वयाज्जडेच्छास्थानीयविसर्गप्रमातृस्थानं वर्णो न श्रूयते तर्हि ? च न दृश्यते । तत्कथमस्य पदस्य पञ्चाङ्गत्वमित्यत्राह–

मायेत्यादि । अणुविदो मन्त्रविदः । मायापदे स्वप्नपदे । भेदविमर्शो मायाभेद विमर्शस्य स्वप्न एव प्रथमाभिव्यक्तिस्थलमिति स्वप्नपदे यामापदमिति च व्यवहारः । तत्र पदे मन एव कालरूपः शरीरताभाक् देहप्रमातृभावभाक् । मनोव्यतिरेकेण स्वप्ने व्यवहर्ता देहो नास्तीति प्राक्प्रतिपादितम् । अतो मनस एव देहत्वमित्यादिशन्ति । कुर्वन्त ? रवकारगर्भे वकारस्यान्तः पकारानन्तरपद इत्यर्थः । तद्वाह्यतोऽपि च वकारात्पूर्वपदे च लकारमनुस्मरन्तः, अनुयोजयन्तः । मनः स्थानीयस्य वियोजने मन एव देहत्वं प्राप्तमिति प्रतीयते । अतस्तथायोजनेन सम्प्रदायप्रवर्तनमेकेपदेश इति

तद्बाह्यतोऽपि च लकारमनुस्मरन्तः
पञ्चाङ्गकं पदमिदं चतुरङ्गमेव ॥ १२ ॥
पृथ्वी लकार इह देहमयी स्वधामा
कर्तृज्ञतेस्य मरुदग्निमयौ यरेफौ ।

---

भावः । वकारात्पूर्वपदे बाह्यत्वेनाभिमते मनःस्थानीयो लकारोऽनुसन्धेयः । वकारात्परपदे आन्तरत्वेनाभिमते देहस्थानीयस्य लकारस्य सन्निवेश इति । ननु विसर्गव्याप्तिपदे विसर्गप्रमातृरूपस्य देहस्य कथमात्मस्थानीयस्य वकारस्य गर्भे सन्निवेश इत्यत्रोच्यते—स्वप्नपदे विसर्गस्य स्थितिर्बिन्दुगर्भ एव, तथापि बिन्दोर्विसर्गेणाव्याप्तिप्रतीतिः । अत एव स्वप्नस्य चिदचिद्व्याप्तिपदेशे विसर्गप्रमातृरूपस्य देहस्य कथमात्मस्थानीयस्य वकारस्य गर्भे सन्निवेश इत्यसङ्केतस्थानतया मिश्राद्वयं वक्ष्यति । जाग्रति तु विसर्गप्रमातुर्बिन्दुर्बहिर्भागसन्निवेशः । अत एव तस्याशुद्धता वक्ष्यते । देहस्यात्मान्तर्गत्वेन अन्तःकरणत्रयस्यात्मान्तर्गतत्वमनुमेयम् । तद्बहिर्गतत्वसन्निवेशस्तद्व्याप्तिप्रतिपत्त्यपेक्षयोपपद्यत इति निरवद्यम् ।

नन्वेतत्पदं पञ्चाङ्गकमुक्तम्, तथा चेच्चतुरङ्गकेण शवर्गेण सह अष्टकोणे कथं समसङ्ख्यया सन्निवेशमर्हति । अथास्य चतुरङ्गत्वे विसर्गव्याप्तिर्न सङ्गच्छत इत्यत्राह—पञ्चाङ्गकमित्यादि । वकारस्य बहिरेव लकारसन्निवेशे चतुरङ्गमेव सत्साम्प्रदायिकेन वकारगर्भे लकारगर्भसन्निवेशरहस्येन पञ्चाङ्गकं चेति विशेषज्ञैः सम्प्रतिपद्यते इति विज्ञेयम् ॥ १२ ॥

उक्तमर्यादया विसर्गव्याप्त्याभिमाने पञ्चाङ्गस्य स्वप्नपदस्या-

व्याप्यैतयोः क्षितिजलौ विकृते लवौ च
स्वात्मास्थितस्य वपुषः करणानि गर्भे ॥ १३ ॥

———

ज्ञेषु वर्णेषु पशुपदत्वात्पृथिव्यादीनां व्युत्क्रमेण सन्निवेशं दर्शयति —

पृथ्वीत्यादि । इह स्वप्नपदे लकारः वकारान्तर्वर्तिलकारः स्वधामाऽन्यास्मिन्पदमाकाशस्थानं प्राप्ता देहरूपिणी पृथ्वी । अस्य पृथ्वीरूपस्य देहस्य विसर्गप्रमातुः । मरुदग्निमयौ वाय्वग्निरूपौ यरेफौ । कर्तृस्थिते ? कर्तृज्ञता क्रिया ज्ञानकरणे विद्याप्तिपदे सलिलजडाग्निरूपे यत्तत्त्वद्वयं तदिदानीं व्युत्क्रमपदे वाय्वग्निजडाग्निस्थानं यकाररेफरूपेण उपलक्षितम् । पृथिव्यात्मनो देहप्रमातुः चिद्व्याप्तौ साधनभूतं क्रियाज्ञानकरणद्वयं भवतीति भावः । क्रियात्मनो देहस्य प्रमातृत्वात् तत्साधनमपि क्रियाप्रधानं भवतीति विज्ञेयम् । वकारात्पूर्वो लकारः वकारश्च लकार स्तयोर्यकाररेफरूपत्वाद्वयव्योः, व्याप्ये विकृते विकृतिमापन्ने । प्रकृत्या वाय्वाकाशरूपयोस्तत्त्वयोः क्षितिजलभागौ वकारक्षितिजलौ । एवं स्वात्मस्थितस्य वपुषः आत्मस्थानीयवकारगर्भे स्थितस्य देहस्य विसर्गप्रमातुः गर्भे करणानि । भवन्तीति शेषः । विसर्गस्य स्वव्याप्तिपदे चित्पदावच्छेदनियमात् आकाशादिरूपस्य विसर्गपदस्य संस्थानविशेषेणैव चिदन(व)च्छेदो गम्यते । विसर्गप्रमातृसाधनाभ्यां वाय्वग्निभ्यां पृथिवीजलयोरुच्छेदो न सिध्यति । वायुना जलस्योच्छेदः, अग्निना पृथिव्या उच्छेदः सम्भवति । वायुना पृथिव्युच्छेदोऽग्निना जलस्योच्छेदो न सम्भाव्यत इति ॥ १३ ॥

मग्नः पुमान्वपुषि चित्तमहंक्रियायां
बुद्धौ जडांशजठरेऽप्यजडस्तदंशः ।
इत्थं प्रमातरि जडांशगताऽजडांशे
ज्ञानाक्रियान्तरवभाति महानजाण्डः ॥ १४ ॥

---

इदानीमात्मनः स्वगर्भस्थेनैव देहादिना व्याप्तिं निरूपयन् मनोबुद्धिरूपस्य विमर्शस्य देहाहङ्काररूपान्तर्जगदुद्गमनानन्तरं बाह्यजगदुद्गमनचमत्कारं दर्शयति—

मग्न इत्यादि । पुमानात्मा वकाररूपः । वपुषि लकाररूपे । मग्नो भवतीति शेषः । चित्तं पूर्वलकाररूपं मनः । अहंक्रियायां यकाररूपे अहङ्कारे मग्न इत्यन्वयः । बुद्धौ जडांशजठरे । अजडस्तदंशः मग्न इत्यन्वयः । बुद्धेरग्नित्वं जडाऽजडरूपत्वं च प्रतिपादितम् । ननु वायुनाहङ्कारेण पृथिवीरूपस्य चित्तस्य कबलनम्, अग्निरूपया बुद्ध्या जलरूपस्यात्मनः कबलनं पूर्वसूत्रेणोन्मीलितम् । इदानीमात्मनो देहेन कबलनं कथमिति चेत् उच्यते । ज्ञानाक्रियारूपं करणद्वयं प्रमातुरङ्गमेव । तत्कबलनं फलतः प्रमातृकबलनमेवेति न विरोधः । इत्थमुक्तनिमज्जनप्रक्रियया । प्रमातरि वकाररूपे प्रमातरि । जडांशगताऽजडांशे विसर्गतदङ्गनिमग्नस्वात्मस्वकीयाङ्गे सति ज्ञानक्रियान्तः; मनोबुद्धिगर्भात् । मनोबुद्धिरूपविमर्शगर्भादित्यर्थः । महान् अतिविततः । अजाण्डो ब्रह्माण्डः । अवभाति निर्गच्छति । विमर्शस्वगर्भादन्तः प्रपञ्चोन्मीलनानन्तरं बाह्यप्रपञ्चमुद्गमतीति भावः । स्वप्नपदे ब्रह्माण्डस्य पिण्डाण्डकारणमतिलौकिकस्यापि सम्प्रत्ययः । जाग्रति तु ब्रह्माण्डः पिण्डाण्डस्य कारणमिति दक्षिणमार्गलौकिकप्रतीतिः । वाममार्गस्य योगिनस्तु

पिण्डाण्डमूलमपि मूलमिवास्य भाति
ब्रह्माण्डमन्तरमपि बाह्यमिवास्य चित्रम् ।
मायाविमोहितदृशा तदणुर्निरीक्ष्य
स्वाङ्गानि पञ्च कलयत्यणुशक्तिकानि ॥ १५ ॥
सङ्कल्पवायुशिखिभूजलखापकर्षा
बन्धाः स्युरन्तरणुकस्य कलाप्यविद्या ।

---

तत्र पिण्डाण्ड एव ब्रह्माण्डकारणमिति निश्चयः सिद्धदर्शने । यामले तु तयोरन्यकार्यकारणत्वं यौगपद्यासिद्धेरिति शक्त्यात्मनोः पिण्डाण्डब्रह्माण्डयोरविनाभाव इति । अन्तः पदे पिण्डाण्डाङ्गं ब्रह्माण्डमिति बहिःपदे ब्रह्माण्डाङ्गं पिण्डाण्डमिति समविवेकः ॥१४॥

इदानीं पशोः स्वस्वरूपभूतात् पिण्डाण्डादेवोदितस्य ब्रह्माण्डस्य दर्शनेन योऽयं विपरीतप्रतीतिरूपविमर्शविलास स्तं विवृणोति--

पिण्डाण्डेति । ब्रह्माण्डपिण्डाण्डमूलमपि स्वप्नेऽपि देहाभिमानिनः विवादं मनोमूलकत्वात्पिण्डाण्डमूलकमपि अस्य पिण्डाण्डस्य स्वयं मूलमिव भाति । अस्य पिण्डाण्डस्य अन्तरेऽपि मनोनिष्ठत्वादन्तःस्थमपि बाह्यमिव भाति । चित्रमद्भुतम् । स्वान्तःस्थस्य स्वव्यापकत्वेन प्रतीतेरद्भुतत्वात् । अणुः सङ्कुचितप्रमाता । तत्तदेवंविधं ब्रह्माण्डम् । मायाविमोहितदृशा मायाचमत्कारपरिग्रहेण विमोहितया विकृतिं गतया दृशा । दृग्विमर्शेन निरीक्ष्य । पञ्च पिण्डाण्डस्थानानि, देहादीनि । स्वाङ्गानि । अणुशक्तिकानि, ब्रह्माण्डापेक्षया अत्यल्पसाराणि । कलयति । मनुते ॥१५॥

इदानीं पशोः पञ्चमहाभूतात्मकब्रह्माण्डाङ्गदर्शनेन संकुचि-

रागश्च कालनियती इति कञ्चुकास्ते
मायात्मनः प्रथमकञ्चुकता सुषुप्तेः ॥ १६ ॥

---

तभूतात्मकस्वस्वरूपापिण्डाण्डानामपकर्षसङ्कल्पा एव अन्तर्बन्धाः कलादिशब्दव्यवाहियमाणाः षट्कञ्चुका भवन्तीत्याह—

सङ्क्लृप्तेति। सङ्क्लृप्तवायुशिखिभूजलखापकर्षाः। सङ्क्लृप्ताः सङ्कल्पिताः वाय्वाद्यपकर्षाः यकाररेफलकारवकारलकारस्थानकवाय्वाग्निक्षितिजलाकाशसङ्कोचाः। अणुकस्य परिच्छिन्नप्रमातुः। अन्तर्बन्धाः स्युः । सङ्कल्पानां पशोरन्तर्हृदयेऽवस्थानात् , प्रपञ्चव्याप्तिलक्षणबन्धमूलत्वाच्च अन्तर्बन्धत्वम् । स्वसङ्कल्पवशाद् बद्ध इति प्रसिद्धेः । तेषां सङ्कल्परूपबन्धानां यकारस्थानकवाय्वादिक्रमेण सिद्धसम्प्रदायप्रसिद्धकलादिषट्कञ्चुकरूपतां क्रमेणानुदिशति—कलेत्यादि । यकारस्थानकवायुसङ्कोच सङ्कल्पः कला नाम कञ्चुको भवति । रेफस्थानकाग्निसङ्कोच सङ्कल्पः अविद्या नाम कञ्चुको भवतीति । लकारस्थानकपृथिवीसङ्कोच सङ्कल्पो राग इति कञ्चुको भवति । वकारस्थानकजलसङ्कोचः सङ्कल्पः कालो नाम कञ्चुको भवति। लकारस्थानकाऽऽकाशसङ्कोचः सङ्कल्पो नियतिर्नाम कञ्चुको भवति । अपरिच्छिन्नप्रमातृपदे सर्वकर्तृत्वस्य वायोः पशुपदे सङ्कोचात्कलामात्रकर्तृत्वमिति कला, सर्वज्ञत्वस्याग्नेर्विद्यारूपस्य सङ्कोचाद्वैपरीत्ये अविद्यात्वम् , पूर्णत्वशक्तेः पृथिव्याः सङ्कोचे ममेदमाशास्यमिति स्पृहापर्यायरागोदयाद्रागत्वम् , नित्यत्वशक्तेः सलिलस्य सङ्कोचे अनित्यताकलनात्कालत्वम् , व्यापकत्वशक्तेराकाशस्य सङ्कोचे अत्रैवाहमिति देशनियमान्नियतित्वमिति कलादीनामुपपत्तिः । ननु कञ्चुकाः

कर्तृत्वशक्तिरनिलः सकलज्ञताग्नि-
र्भूः पूर्णताऽविलयताम्बु वियद्विभुत्वम् ।

---

षडितिप्रसिद्धिस्तत्र माया प्रथमेति श्रूयते तस्याः कथं नात्र विवेक इत्यत्राह–मायात्मन इति । योऽयं पञ्चकञ्चुकरूपात्स्वप्नात्पूर्वभाविनी तत्कारणरूपभूता जडसुषुप्तिः । सैव मायाभेदसंसारस्य मूलरूपत्वात् तस्या मायात्मनः सुषुप्तेः प्रथमकञ्चुकता क्षकारादि ककारान्तवर्णाः शिवादीक्षित्यन्तषट्त्रिंशत्तत्त्वरूपा इति साम्प्रदायिकी प्रसिद्धिः । ते च वर्णा द्विरूपेण ळकारेण सह पञ्चत्रिंशकेन, षकारक्षकारयोरेकवर्णत्वेन सम्प्रदाये सम्प्रतिपन्नत्वात् । ततः स्वरवर्गस्य मायातत्त्वरूपस्यान्तस्तवर्गमूले सन्निवेशे वर्णेषु षट्त्रिंशत्तत्त्वस्थिति रविसंवादिनी । सर्वखण्डः खलु व्यापकखण्डस्य मूलम् । यवर्गरूपभेदस्वप्नबीजत्वाच्च वर्गरूपाभेदस्वप्नविश्रान्तिपदत्वाच्च । उत्पत्त्यपेक्षया ज्ञानस्य प्राधान्यं, प्रतीत्यपेक्षया क्रियायाः प्राधान्यमितिज्ञानाक्रियासंसाररूपयोः, स्वप्नजाग्रतोर्मध्ये सर्वकारणस्य सुषुप्तेः, स्वरवर्गरूपस्य सन्निवेश इति स्वरवर्गे स्वप्नवासनारूपयकारो मायातत्त्वस्थानमिति विवेकः ॥ १८ ॥

इदानीं यकारादिस्थानानां वाय्वादीनां भूतानां पूर्णापूर्णतया जीवशिवस्वरूपकर्तृत्वादिपञ्चशक्तित्वं व्युत्पादयति—

कर्तृत्वेति । अनिलः शिवस्य सर्वकर्तृत्वशक्तिः । अग्निः-सर्वज्ञताशक्तिः । भूः–पूर्णताशक्तिः । अम्बु–अविलयता नित्यत्वशक्तिः । वियदाकाशः–विभुत्वं व्यापकत्वशक्तिः । इमाः पञ्चापि शक्तयः निरताः पूर्णाः शम्भोः स्वरूपं भवन्ति । सङ्कुचितास्तु पशोः स्वरूपं भवन्ति । सर्वस्याः क्रियायाः स्पन्दरूपत्वात्, स्पन्दस्य वायुधर्मत्वा-

पञ्चापि शक्तय इमा विततः स्वरूपं
शम्भोर्भवन्त्यपि च सङ्कुचिताः पशोस्तु ॥ १७ ॥
स्यात्पञ्चशक्तिमयता प्रकृतिः शिवस्य
स्वान्तर्जगत्कलनमप्यथ देहिनस्तु।

---

द्वयोः कर्तृत्वशक्तिता। ज्ञानस्य भासनरूपत्वात्, भासनस्य तेजोधर्मत्वाद्वह्नेर्ज्ञत्वशक्तिता। सम्पन्नतापर्यायस्य पूर्णत्वस्य सकलभोग्यवस्तुमूलत्वात्सकलभोग्यवस्तूनां पृथिवीमूलत्वात् पृथिव्याः पूर्णत्वशक्तिता। नित्यत्वस्याऽऽप्यायनाविच्छेदमूलत्वादाप्यायनस्य जलधर्मत्वाज्जलस्य नित्यत्वशक्तित्वम्। विभुत्वस्य व्याप्तिमूलत्वा व्याप्तेराकाशधर्मत्वादाकाशस्य विभुत्वशक्तिरिति विवेकः ॥ १७ ॥

शिवयोः पञ्चशक्तिमयत्वे सामान्ये भेदकं धर्ममुत्पादयति--स्यादिति। शिवस्य पञ्चशक्तिमयता प्रकृतिः स्वभावः स्यात्। अष्टौ मूर्तयः शिवस्येति प्रसिद्धिः। तत्र चन्द्रार्कयोस्तेजसि वन्हावन्तर्भावाद्यजमानस्य चिदात्मन आकाशे तेजसि शिवान्तर्भावात् ब्रह्माण्डरूपेण परिणताः पञ्चमहाभूता एव शिवस्य स्वरूपमाकाशप्रभृतिका इत्युपपन्नम्। शिवस्य जीवाद्भेदकं धर्ममाह--स्वान्तर्जगत्कलनमिति। महाभूतपरिणामरूपाणां जगतां भूर्भुवादीनां महाभूतेष्वेवावस्थानात् तदात्मनः शिवस्य स्वान्तर्जगत्कलनमेतावती शिवस्य प्रकृतिः। अथ देहिनस्तु। अथ पक्षान्तरे। पञ्चभूतात्मकत्वात् पञ्चशक्तिमयस्यैव सतः स्वाभ्यन्तरस्थजगतः पिण्डाण्डरूपस्य जीवस्य। पिण्डाण्डादेव ब्रह्माण्डोदयात्तत्रैव तस्य संस्थानात् स्वाभ्यन्तरस्थजगतोऽपीत्युपपन्नम्।

बाह्ये जगत्कलनमेव भवेद्धिभेदः
स्वाभ्यन्तरस्थजगतोऽपि विमोहशक्त्या ॥ १८ ॥
अन्तःस्थितस्य मनसो न हि पूर्तियोग-
श्चैत्यस्य तत्कबलितत्वविनिश्चयायाः ।

---

विमोहशक्त्या विपरीतप्रतीतिरूपविमर्शे शक्त्या। बाह्ये व्याप्तिपदे। यज्जगत्कलनम्, जगतामवस्थानसङ्कल्पः। तदेव शिवाद्विशेषः। भेदको धर्मः। यदा निजस्वरूपं पिण्डाण्डब्रह्माण्डस्य मूलतया ब्रह्माण्डादाधिकं मन्यते। तदा स्वस्वरूपस्यैव ब्रह्माण्डत्वे तदुत्तीर्णत्वे च प्राप्ते सति विश्वमयविश्वोत्तीर्णस्वभावं शिवत्वमेव शिवस्य प्राप्नोतीति भावः ॥ १८ ॥

इदानीं स्वप्नस्य मिश्राध्वताप्रतिपादनाय तत्र चिदचिद्व्याप्तिसाङ्कर्यं दर्शयति—

अन्तरित्यादि। मनसः। अतःस्थितस्य चैत्यस्य। देहब्रह्माण्डरूपस्य वेद्यस्य। पूर्तियोगः पूर्त्युपपत्तिः। न, हि। तत्कबलितत्वविनिश्चयायाः—तेनोभयविधेन चैत्येन कबलितत्वं व्याप्तत्वम्, तत्र विनिश्चयः, प्रतिपत्तिदार्ढ्यम् यस्याः सा, तथोक्ता। चितेरपि वकारस्थानकस्यात्मनोऽपि तद्वत्, न। यथा चैत्यस्य तथेत्यर्थः। पूर्तिः, चैत्यस्य चिदन्तर्गतत्वे परमार्थे चिद्व्याप्तिरेवास्तु। अन्यथा प्रतिपत्तिदोषेण परमार्थस्य न खलु व्याहतिरिति नाशङ्कनीयम्। निर्विकल्पपरमार्थो मूलवस्तु, निर्विकल्पवशादेव खलु संसाराध्यवसायः। न हि पारमार्थिकः संसारः। अतस्तत्तत्प्रतीतिरूपविमर्शभासिता भावा अतात्त्विकत्वेन नापन्हवनीयाः। तथात्वे सर्वस्यापि संसारस्यापन्हवीयत्वप्रसक्तेरित्यलं रहस्योपदेशान्तरा-

तद्व्याप्तेरपि न पूर्तिरतो दशेयं
पक्षद्वये स्फुरदपूर्त्यभिपूर्तियोगा ॥ १९ ॥
अध्वा भवेच्चिदपकर्षवशादशुद्धः
शुद्धस्ततौ भवति चैत्यपदापकर्षात् ।
चिच्चैत्ययोरुपचयाऽपचयाऽविशेषान्-
मिश्रो हि मायिकपदं भवतीदमध्वा ॥ २० ॥

---

यकथाभिः, अतश्चिदचितोर्व्याप्तिनिर्णयानैकान्त्यात् । इयं दशा । स्वप्नः। पक्षद्वये चिदचिद्रूपे पक्षद्वये। स्फुरदपूर्त्यभिपूर्तियोगा, स्फुरन्त्योरपूर्त्यभिपूर्त्योर्योगः संसृष्टिरस्यामिति सा तथोक्ता ॥१९॥

स्वप्नस्याशुद्धाध्वताप्रवचनप्रस्थाने सर्वस्याप्यध्वनः स्वरूपं व्युत्पादयति—

अध्वेति । चिदपकर्षवशाच्चैत्यस्य व्याप्त्या चित्तत्वस्यापकर्षे व्याप्यत्वे प्राप्ते तद्वशात् । अशुद्धः अध्वा भवति। यत्र यतो व्याप्यत्वादपकर्षः, तदेव पदमशुद्धाध्वेति व्यवह्रियते। भेदजाग्रज्जडसुषुप्तिश्च शुद्धाध्वेत्यर्थः । तत्र चैत्यव्याप्तेरेकाधिपत्येन चितो व्याप्यत्वात् । असावध्वा चैत्यपदापकर्षात् शुद्धो भवति । शुद्ध इति व्यवह्रियते । तुर्यपदं शुद्धाध्वा चिद्व्याप्तिरेकाधिपत्येन चैत्यस्य व्याप्यत्वात् । इदं मायिकपदं स्वप्नपदम् चिच्चैत्ययोरुपचयापचयाविशेषात् । उपचयो व्यापकत्वम् । अपचयो व्याप्यत्वम् । तयोरविशेषः सामान्यभावः। चिच्चैत्ययोः प्रत्येकं व्याप्य व्याप्तिसामान्यात् मिश्रो ह्यध्वा भवति । मिश्राध्वेति व्यवह्रियते । विश्वस्य चिन्मयत्वपारमार्थ्यात् , तद्व्याप्तिप्रतीतिरेव शुद्धिः । तद्वान् शुद्धः । चैत्यव्याप्तेश्चमत्कारमात्रतया ।चित्स्वरूपावरकत्वेन मलप-

आत्मा वकारवपुषाणुरुकार एव
देहात्मनैव खलु संसृतिरस्य जन्तोः ।
देहं च तात्त्विकममुष्य सुषुप्तमेव
स्वप्ने तदत्र मन एव शरीरताभाक् ॥ २१ ॥

॥ इति मातृकाचक्रविवेके स्वप्नविवेकस्तृतीयः खण्डः ॥

---

र्यायतायां चैत्यव्याप्तिप्रतीतिरशुद्धिः । तद्धानशुद्ध इति वेदितव्यम् । जाग्रदादीनामेव दशानां शिवजीवयोः सञ्चरणपर्याये पुनःपुनरभ्यावृत्तिविषयतया व्यवहारः ॥ २० ॥

प्रकरणमुपसंहरन स्वप्ने मनस एव शरीरत्वमिति विप्रतिपत्तिविषयत्वात् सविशेषं प्रतिपादयति—

आत्मेति । अकारादिरूपे सुषुप्तिपदे आत्मस्थानीये य उकारः सोऽयमुकाररूप एवात्मा स्वप्नपदे वकारवपुषा वकाररूपेण । अणुः सङ्कुचितः । अस्य वकाररूपस्य जन्तोः जीवस्य । देहात्मनैव देहरूपेणैव । संसृतिः संसरणम् खलु शिववद्देहबन्धं विना निर्मलचिदाकाशरूपेण संसरणलीलाचमत्कारानुसन्धानं न संभवतीति भावः । अतो जीवस्य संसरणे देहमवश्यं स्वप्ने मनः—कल्पितम्, तात्त्विकं देहं सुषुप्तमेव निमीलितबहिरिन्द्रियग्रामं सच्छय्यातलं न जहातीति भावः । तस्यैव स्वप्नसंसारिणोऽधिष्ठातृत्वे स्वप्नसंभावितालङ्गुलिच्छेदादेर्जाग्रति सम्पातप्रसक्तेः । यद्यपि तात्त्विकस्यापि देहस्य मनोमूलत्वं तथापि लौकिकप्रतीत्यपेक्षयाऽतात्त्विकं मनःकृतमित्युक्तम् । तत्तस्मात्कारणाद् अत्र स्वप्ने । मन एव । पारिशेष्यादिति भावः । शरीरताभाक्, शरीरत्वं भजतीति सम्प्रतिपन्नं लौकिकस्यापीत्यर्थः ॥ २१ ॥

शम्भोर्दक्षिणमक्षिभूतवितते: शोषे यकारः पटु-
र्नेत्रं मध्यममुष्य लोकदहने जागर्तिरेफाक्षरम् ।
विश्वाप्लावककर्मठं पशुपतेर्वामेक्षणे वाक्षरं
त्रैनेत्रं पदमाददाति जपतामेतत्त्रयं देहिनाम् ॥
मुक्त्या मग्नस्य जलधौ विश्वस्योद्धृत्य धारणात् ।
मन्त्रविद्भिर्यवर्गोऽयं धारणाशक्तिरुच्यते ॥ १ ॥
स्थितिरिन्द्रे हि विश्वस्य लकारे मानसे तथा ।
तदिन्द्राख्या लकारस्य मन्त्रवित्साम्प्रदायिनी ॥ २ ॥
वकारं च लकारं च भित्वा बुध्यातितीक्ष्णया ।
(वलभिद्वलभित्प्रोक्ता नवतानाम राक्षसः) ॥ ३ ॥
भेदप्रसयघस्मरैर्नवरसैः पेयैर्यकारात्मकै-
?र्लाकारैरुपदंशनैश्च रदनोत्पत्तिक्रियायाः फलैः ।
मायां ये समुपासते कृतधियस्तेषां यवर्गास्थितं
मायास्फूर्तिरहस्यमन्तराचिराद्द्योतते स्वात्मनि ॥ ४ ॥
शिवानन्देन मुनिना देशिकादेशवर्तिना ।
तृतीयं मातृकाचक्रविवेके व्याकृतं पदम् ॥ ५ ॥

॥ इति तृतीयः खण्डः समाप्तः ॥ ३ ॥

# अथ चतुर्थः खण्डः ॥

इत्यन्तरीषदिह सङ्कुचिते विमर्शे
सङ्कोचमाश्रयति बाह्यपदे प्रगाढम् ।

---

अथ स्कन्धान्तरमारभमाणः पूर्वोत्तरस्कन्धयोः सम्बन्धदर्शनाय पूर्वस्कन्धप्रमेयानुवादपूर्वकमुत्तरस्कन्धप्रमेयं प्रस्तौति—

इतीत्यादि । इत्युक्तप्रकारेण । अन्तरन्तःकरणकक्ष्यायाम् । इह स्वप्नदशायाम् । ईषत्सङ्कुचिते विमर्शे बाह्यपदे बाह्येन्द्रियकक्ष्यायाम् । जाग्रति । प्रगाढमतिमात्रं सङ्कोचमाश्रयति । भूतानि जगतो नियतः कलापः । जगतो भूतपरिणामरूपत्वात् भूतानां नियमेन जगत्कलापत्वम् । प्रत्येकं पञ्चभावं कलयन्ति प्राप्नुवन्ति । विमर्शस्यातिसङ्कोचपदे जाग्रति भूतानामप्यतिसङ्कोचपरिग्रहात् । पृथिव्यादीनामेकैकस्य पृथिव्यादिपञ्चरूपत्वेनातिसङ्कोचः । पशुप्रमातृपदस्य सलिलस्य पुरुषप्रकृत्यादिरूपेण पञ्चभूतात्मतयातिसङ्कोचः । पशुप्रमातृज्ञानेन्द्रियपदायाः पृथिव्याः श्रोत्रत्वगादिरूपेण पञ्चभूतात्मतयातिसङ्कोचः । पशुप्रमातृकर्मेन्द्रियपदस्याग्नेर्वाक्पाण्यादिरूपेण पञ्चभूतात्मतयातिसङ्कोचः । पशुप्रमातृज्ञेयवेद्यपदस्य वायोः शब्दस्पर्शादिरूपेण पञ्चभूतात्मतयातिसङ्कोचः । पशुप्रमातुः कार्यवेद्यरूपस्याकारस्याकाशवाय्वादिरूपेण पञ्चभूतात्मतयाति-

प्रत्येकमेव कलयन्त्यथ भावमेवं
भूतानि पञ्च जगतो नियतः कलापः ॥ १ ॥
यद्वर्णपञ्चकमपूर्वकमादिवर्ग्य-
मन्तःस्थतां भजति सङ्कुचिते तदीषत् ।

———

सङ्कोचः । अत्रायमर्थो गम्यते—भूतानांप्रत्येकंपञ्चभूतात्मतया विलसनं स्वभावः सुषुप्तिस्वप्नयोरपि सङ्कोचान्निषयत्वान्नोन्मिषति । जाग्रत्यतिसङ्कोचपदे तु समुन्मिषतीति । एतेन भूतानामपि सर्वेषां सर्वभूतैः सहाविनाभावसम्बन्ध नियम इति वेदितव्यम्॥१॥

इदानीं जाग्रत्प्रस्तावे कादिमान्तस्पर्शवर्णानां सङ्कोचाधिक्यदर्शनाय सर्ववर्णकारणरूपस्याकारादिवर्णपञ्चकस्य स्फुरणे प्रतिपादिप्रक्रियां व्युत्पादयति—

यद्वर्णेत्यादि । आदिवर्गः–वर्णानामादित्वादादिवर्गः स्वरवर्गः । तत्र भवम् आदिवर्ग्यम् । अपूर्वकम्, अकारः पूर्वो यस्य वर्णपञ्चकस्य तदपूर्वकं यद्वर्णपञ्चकम् अकारेकारऋकारऌकाररूपम् । तदेवं वर्णपञ्चकम् । ईषत्सङ्कुचितं सत् । ईषत्स्पृष्टताप्रयत्नविषयतया ईषत्सङ्कुचितं सत् । अन्तःस्थतां यकारादिरूपतां भजति । इत्य?कारस्येषत्सङ्कोचो यकारः, ऋकारस्य रेफः, (ऌ)?इकारस्य लकारः, उकारस्य वकारः, सङ्कोचः । मनस एव लकारस्थानकस्य विसर्गप्रमातृपर्यायदेहरूपत्वादकारसङ्कोचो नास्ति । एवमकारादिवर्णपञ्चकस्यैव रूपान्तरमन्तःस्थवर्गः । तदेव वर्णपञ्चकं नितान्तं सङ्कुचितं स्पृष्टताविषयतयातिसङ्कुचितं सत् । कादिवर्गतनु–कवर्गादिवर्गपञ्चकस्वरूपम् । अकारस्य सङ्कोचः कवर्गः । इकारस्य सङ्कोचश्चवर्गः । ऋकारस्य

तस्कादिवर्गतनुसङ्कुचितं नितान्त-
मूष्मात्मकं च दधतेऽङ्कुरिताभिपूर्ति ॥ २ ॥
स्थानेन साधितधराप्रभृतिस्वभावे
वर्णोत्करे भवति मातृपदं पवर्गः ।

---

सङ्कोचष्टवर्गः । (ल)?इकारस्य सङ्कोचस्तवर्गः । उकारस्य सङ्कोचः पवर्गः । अथ तदेव वर्णपञ्चकम् । अङ्कुरिताभिपूर्ति-ईषद्विवृत्तिप्रयत्नविषयतया अङ्कुरितपूर्णत्वं सत् ऊष्मात्मकं च । (दधते-भजति) पवर्गपञ्चकरूपेण सङ्कुचितस्याकारादिवर्णपञ्चकस्येषत्पूर्णत्वरूपा ऊष्माण इत्यर्थः । चवर्गस्येषत्पूर्णत्वं शकारः । टवर्गस्येषत्पूर्णत्वं षकारः । तवर्गस्येषत्पूर्णत्वं सकारः । कवर्गस्येषत्पूर्णत्वं हकारः । एवं कारणरूपस्याकारादिवर्णपञ्चकस्यैव दशाविशेषास्तत्कार्यरूपाः सर्वे वर्णा इति विवेकः ॥ २ ॥

अथ स्पर्शकदम्बकस्य स्थानवशात्पृथिव्यादिरूपत्वविवेकं प्रागुक्तप्रमेयतया सूचयन्निति तत्प्रमातृपदस्य पवर्गस्य वर्णपञ्चके तत्प्रतिपाद्यं तत्त्वपञ्चकं व्युत्पादयति—

स्थानेति । स्थानेन कण्ठताल्वादीना । साधितधराप्रभृतिस्वभावे प्रागुक्तप्रक्रियया नीचोच्चस्थानेपर्यालोचनया निश्चितपृथिव्यादिस्वभावे । वर्णोत्करे स्पर्शवर्णकदम्बके । पवर्गो मातृपदं प्रमातृस्थानं भवति । यद्यपि कवर्गस्यैव व्यापकतया प्रमातृपदत्वं तथापि चैत्यस्य प्रमातृत्वं वैकारिकं चितः प्रमेयत्वं च तथेति चित्पदस्य पवर्गस्य प्रमातृपदव्यवहारः पूर्व(शा)शासनयेति निरवद्यम् । अवरोहभङ्ग्या विलोमक्रमेण । मकारमारभ्य पकारपर्यन्तमित्यर्थः । आत्मा, मनः, बुद्धिः, अहङ्क्रिया, प्रकृतिरितिपवर्गवर्णानां वि-

आत्मा मनस्तदनु बुद्धिरहङ्क्रिया च
प्राक् चेतसः प्रकृतिरप्यवरोहभङ्ग्या ॥ ३ ॥

---

क्रोमक्रमेण तत्त्वपञ्चकस्वरूपता। तद्भावकत्वे तत्स्वरूपत्वमुपचारतः। मकार आत्मा, पुरुषतत्त्वमित्यर्थः। भकारो मनस्तत्त्वम्। बकारो बुद्धितत्त्वम् फकारोऽहङ्कारतत्त्वम्। पकारः प्रकृतितत्त्वमिति विज्ञेयम् ॥ पकारादिवर्णपञ्चकस्य पृथिव्याद्याकाशान्तरा(ता)णां सत्यामेव प्रकृत्यादिव्यवहारः। पृथिव्यंशः प्रकृतिः। जलांशोऽहङ्कारः। अग्न्यंशो बुद्धिः। वाय्वंशो मनः। आकाशांशः पुरुष इति विवेकः। एवमितरवर्गचतुष्टयस्यापि प्रथमवर्णादारभ्य पृथिव्याद्यंशत्वे सत्येव वक्ष्यमाणतत्तत्तत्त्वरूपता विज्ञेया।

ननु पुरुषतत्त्वानन्तरं प्रकृतितत्त्वमिति प्रवादः तत्कथमत्र क्रमविरोध इत्यत्राह–प्राक्चेतस इति। चेतसो मनसः प्राक् प्रथमं प्रकृतिरिति तत्त्वोदयक्रमः। अकारपृथिवीरूपयोः पुरुषप्रकृत्योर्धर्मिणोरनन्तरं तद्धर्मभूतानां मनोबुद्ध्यहङ्काराणामुदयोपपत्तिः, तथापि तेषां धर्माणां धर्मिद्वयमध्य एवोदयात् मध्यगता परिगणना, उदयापेक्षया धर्माणां धर्मिद्वयानन्तर्यं मनवस्थित्यपेक्षया तु धर्मिद्वयमध्यत्वमिति भावः। मध्यत्वेऽपि मनसः पुरुषधर्मत्वात्तत्समीप एवात्र स्थानम्, अहङ्कारस्य प्रकृतिधर्मतया प्रकृतिसमीप एव स्थितिः, मनोऽहंकारयोर्मध्ये उभयधर्मस्य बुद्धेः स्थितिरिति विज्ञेयम्। विसर्गव्याप्तौ प्रकृत्यहङ्कारबुद्धिमनःपुरुषा इति बिन्दुव्याप्तौ पुरुषमनोबुद्ध्यहङ्कारप्रकृतय इति क्रमः, तदत्र विसर्गव्याप्तेः प्राथम्यात् प्रकृत्यादिकः क्रमोऽङ्गीकर्तव्यः ॥ ३ ॥

श्रोत्रादिकं खलु तवर्गमयं विलोमा-
द्वागादि पञ्चकमिदं च टवर्गरूपम् ।
शब्दादि खाद्यपि चवर्गकवर्गरूप-
मेतानि वायुदहनाम्बुमहीविलासाः ॥ ४ ॥

---

पवर्गवर्णप्रतिपाद्यानि तत्त्वान्युक्त्वा तवर्गादिवर्णप्रतिपाद्यान्यपि तत्त्वानि व्युत्पादयति—

श्रोत्रादिकमित्यादि । श्रोत्रादिकं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणरूपं तत्त्वपञ्चकम् । विलोमात्तवर्गमयम्, विलोमक्रमिकतवर्गरूपनकारादितकारान्तवर्णपञ्चकरूपमित्यर्थः । अत्रापि नकारप्रतिपाद्यं श्रोत्रतत्त्वमाकाशांशः । धकारप्रतिपाद्या त्वक् वाय्वंशः । दकारप्रतिपाद्यं चक्षुस्तेजोऽशः । थकारप्रतिपाद्या जिह्वा जलांशः । तकारप्रतिपाद्यः प्राणः पृथिव्यंश इति विज्ञेयम् । इदं प्रत्यक्षानिर्देश्यं वागादिपञ्चकं च वाक्पादपाण्युपस्थपायुरूपतत्त्वपञ्चकम् । विलोमादित्यस्यात्रापि सम्बन्धः । विलोमक्रमिकटवर्गरूपम् । णकार आकाशांशो वाक् । ढकारो वाय्वंशः पादौ । डकारस्तेजोंऽशः पाणी । ठकारो जलांशः उपस्थः । टकारः पृथिव्यंशः पायुः । शब्दादि-शब्दस्पर्शरूपरसगन्धरूप तत्त्वपञ्चकमाकाशाद्यपि च आकाशवात्वग्निजलपृथिवीरूपं तत्त्वपञ्चकं च । क्रमेण चवर्गकवर्गरूपम् । अत्रापि विलोमादित्यस्यानुवृत्तिः । ञकार आकाशांशः शब्दः । झकारो वाय्वंशः स्पर्शः । जकारस्तेजोंऽशो रूपम् । छकारः सलिलांशो रसः । चकारः पृथिव्यंशो गन्धः । ङकार आकाशः । घकारो वायुः । गकारस्तेजः । खकारः सलिलम् । ककारः पृथिवीति विवेकः । एतानि तवर्गादिवर्गचतुष्टयतत्त्वानि ।

देहात्मिका प्रकृतिरान्तररूपमुर्व्याः
सूक्ष्मं जलस्य खलु रूपमहङ्क्रिया स्यात् ।
अग्नेस्तु बुद्धिरनिलस्य मनोऽन्तरात्मा
सर्गः खलु प्रकृतिजः क्षितिसर्गबीजम् ॥ ५ ॥

---

वायुदहनाम्बुमहीविलासाः। वायोस्तवर्गाधिष्ठातृत्वात् तवर्गप्रतिपाद्यतत्त्वानि वायुविलासा इति विज्ञेयम् । अग्नेष्टवर्गाधिष्ठातृत्वात् टवर्गप्रतिपाद्यतत्त्वानि अग्निविलासाः। जलस्य चवर्गाधिष्ठातृत्वाच्चावर्गप्रतिपाद्यतत्त्वानि जलस्य विलासाः। पृथिव्याः कवर्गाधिष्ठातृत्वात् कवर्गप्रतिपाद्यतत्त्वानि पृथिवीविलासाइति विवेकः॥४॥

इदानींकचटतवर्गतत्वात्मनः स्थूलस्य पृथिव्यण्डस्य पवर्गवर्णरूपं प्रकृत्यन्तं सूक्ष्मरूपतया कारणमिति प्रतिपादयति—

देहात्मिकेति । देहात्मिका देहरूपिणी । प्रकृतिः। देहाभिमान एव प्रकृतिरिति व्यवह्रियते । सा प्रकृतिः । उर्व्याः पृथिव्याः । कवर्गरूपिण्या इति भावः । आन्तरम् , अन्तःकक्ष्यास्थितं रूपं स्वरूपं सूक्ष्मं रूपम् । अहंक्रियाऽहङ्कारः स्यात्खलु। अग्नेष्टवर्गरूपस्य अन्तरात्मना बुद्धिः । आनिलस्य तवर्गरूपस्य अन्तरात्मना मनः। एवं प्रकृतिजः सर्गः संसारः । पवर्गवर्णचतुष्टयं भवति । रूपप्रकृति संसारः । क्षितिवर्गस्य कवर्गादिवर्गचतुष्टयात्मनः पृथिवी संसारस्य। बीजं कारणम्। सूक्ष्मस्य प्रकृतिसंसारस्यैव स्थूलभावः पृथिवी संसार इति प्रकृतिसंसारस्य ब्रह्माण्डपर्यायस्य कार्यत्वं स्वाभाविकस्य प्रकृत्यन्तस्य पृथिव्यन्त मूलत्वं, प्रकृत्यन्तस्तु मायाविलास इति तात्पर्यम् । अत एव चतुरस्ररूपस्य प्रकृत्यन्त-

देहात्मनोः प्रकृतिपूरुषयोः प्रमाता
देहोत्र तस्य निलयोऽपि तदङ्गमात्मा ।
आत्मा यथा भवति मातृपदं वपुश्चेत्
तल्लीनमस्त्यविरहः शिवयोः स्वभावः ॥ ६ ॥

---

स्य रविबिम्बत्वं दशारयुग्मरूपस्य पृथिव्यन्तस्य रश्मिचक्रत्वं महायन्त्रे विभाव्यते ॥ ५ ॥

इदानीं प्रकृत्यण्डमारभते—

देहात्मनोरित्यादि । देहात्मनोर्देहात्मपर्याययोः प्रकृतिपुरुषयोर्मध्ये । अत्रविसर्गप्रकरणे । देहः । प्रमाता । तस्य देहस्य । निलयोऽपि आश्रयोऽपि । अपि शब्देनाङ्गित्वसम्भावना प्रतीयते । देहस्य विमर्शतत्त्वपरिणामरूपस्य आत्मनः प्रकाशं विना न कुत्रापि स्थितिरुपपद्यते, धर्मस्य धर्मिण्येवाश्रयणमिति नियमात् । आत्मातदङ्गम्, तस्य देहस्याङ्गं तदन्तर्गतत्वेन तदङ्गत्वम् । विसर्गप्रमातृदेहस्य प्रकृतिपर्यायस्य व्याप्तौ आत्मा तदन्तर्गतः सन् तदङ्गतां भजते । यथा आत्माप्रमातृपदं प्रमातृस्थानं भजत्यारोहते । तत्र बिन्दुव्याप्तिपदे । तल्लीनम्—तस्मिन्नात्मनि लीनमेकरसीभूतम् । वपुः । अस्ति सत्तामवलम्बते । न तु परमोच्छेदं प्राप्नोति । तथात्वे विमर्शपदस्यापुनरुदयप्रसङ्गात् । विमर्शस्य पुनः पुनरुदयप्रकाशव्याप्तावपि विमर्शस्यात्यन्तिकोच्छेदो न सम्भाव्यते इत्यवधारणीयम् । प्रकाशविमर्शयोरितरेतरव्याप्तौ उभयोरप्यनुच्छेदं प्रतिपादयति—अविरह इति । शिवयोः शिवा च शिवश्च शिवौ तयोः शिवयोः । अविरहः अन्योन्याविनाभावः । स्वभावः नैसर्गिक इत्यर्थः । प्रकाशं विना

जाड्यादहङ्कृतिरिव प्रथते विमर्शो
बुद्धिर्जडाजडतया मनसस्त्वजाड्यात् ।

---

विमर्शोऽपि न विमर्शं विना प्रकाशोऽपि न, किन्तु प्रकाशव्याप्तौ विमर्शस्य प्रकाशैकरस्येन स्थितिः, विमर्शव्याप्तौ प्रकाशस्य भिन्नरसत्वेनैव स्थितिरिति विभागः ॥ ६ ॥

एवं धर्मिणोः देहात्मनोः स्वरूपं विचार्य इदानीं अहङ्कारबुद्धिमनोरूपेण त्रिविधस्य विमर्शादभिन्नस्य धर्मस्य स्वरूपं परामृशति—

जाड्यादित्यादि । विमर्शजाड्यात् जडत्वभूमिका परिग्रहात् अहङ्कृतिरितिप्रथते । प्रसिद्धो भवति । जडत्वभूमिकापरिग्रहविमर्श एवाहङ्कारशब्देन व्यवह्रियते इत्यर्थः । देहे अहमिति योऽयं विमर्शः स एव जडः विमर्शोऽहंकारः । जडभूतदेहाश्रितत्वेन तद्धर्मत्वात् । अयमेव जडाविमर्शोऽन्तःकक्ष्यायामहङ्कारः सन् देहधर्मबहिःकक्ष्यायां शब्दादिपञ्चकरूपः सन् भूतचतुष्टयाङ्कायाः पृथिव्या आङ्गिन्या धर्मः । अथ विमर्श एव जडाजडत्वभूमिकापरिग्रहे बुद्धिरिति व्यवह्रियते इत्याह—बुद्धिर्जडाजडतयेति । क्रियासाधनमिन्द्रियं स्वयमपि स्थौल्येन क्रियारूपत्वाज्जडं च स्वत एव स्पन्दमानत्वादजडं च, अतः क्रियासाधनरूपेण जडाजडो विमर्शः अन्तः कक्ष्यायां बुद्धिरित्युच्यते । बहिः कक्ष्यायां वागादिपञ्चकमुच्यते ।

अथ विमर्श एव अजडत्वभूमिकापरिग्रहेण मन इत्युच्यते विमर्शस्याजडत्वं ज्ञानसाधनरूपेण । ज्ञानसाधनं खलु मनश्चक्षुरादिकमन्तर्बहिः कक्ष्याविभक्तं सूक्ष्मरूपतया बुद्धिवागादिवि-

त्रैगुण्यमेतदबहिः करणत्रयं स्यात्
सौषुप्तजाग्रदवशेषदशानिदानम् ॥ ७ ॥
देही गुणत्रयमयप्रकृतिर्दशासु
सुप्त्यादिकासु नियमात्परिबंभ्रमीति ।

---

क्षणं पदं जडमेव । एवं विमर्शरूपमहंकाराद्यन्तःकरणत्रयमेव गुणत्रयमित्याह—त्रैगुण्यमिति । एतद्बहिःकरणत्रयम् , अन्तः करणत्रयत्रैगुण्यं सत्त्वादित्रिगुणसमाहारः स्यात् । अहंकारो रजोगुणः । उत्पत्तिरूपत्वात् । बुद्धिः सत्त्वम् । स्थितिरूपत्वात् । मनसस्तमोगुणः संहाररूपत्वात् । चिदेकाकारता खलु संहारः प्रकाशविश्रान्तिरूपो लौकिकैः स्तम इत्युच्यते । तदस्य मनसो लौकिकापेक्षयैव तमस्त्वम् । अथवा क्रियायाः संहारपक्षे क्रियारूपोऽहङ्कारस्तमः, ज्ञानरूपं मनोरजः, अजडत्वं जगदुत्पत्तिदशा, जडत्वं तत्संहार इति लौकिकः पक्षः । जडत्वं जगदुत्पत्तिदशा, अडत्वं संहारदशेति योगसिद्धान्तः । अतो यथाविवक्षितं जडाजडयोरहङ्कारमनसोस्तमोरजोगुणयोर्योजना कर्तव्या । अथैतदेहान्तःकरणत्रयंसुप्त्यादिदशात्रयबीजमित्याह—सौषुप्तेति । सुषुप्तिरेव सौषुप्तं सुषुप्तिजाग्रद्ध्यामवशेषदशा स्वप्नः, अहङ्कारो जडत्वात्सुषुप्तिनिदानम् , बुद्धिर्जडाजडतया जाग्रन्निदानम् , मनस्त्वजडतया स्वप्ननिदानमिति विवेकः ॥ ७ ॥

इदानीं देहिनो गुणत्रयमयप्रकृतियोगेन सुप्त्यादिदशात्रये परिभ्रमणमित्याह ।

देहीति । देही देहाभिमानी प्रमाता गुणत्रयमयप्रकृतिः गुणत्रयसंसृष्टिरूपिणी प्रकृतिः स्वभावो देहपर्यायो यस्य तथो-

तास्वप्यहङ्कृतिपुरःसरणात्रिपुट्यां
मेयोन्नतिं कलयति प्रमुखाक्रियांशम् ॥ ८ ॥
मेयादिका सततयुक्त्रिपुटी मनस्तां
मेयादि भासयति मूढमहाङ्क्रियात्म ।

---

क्तः । एतेन गुणत्रयसंसृष्टिरेव प्रकृतिरिति प्रकृतिलक्षणमुक्तम् । एवंरूपप्रकृतिर्जीवः सुप्त्यादिकासु दशासु सुषुप्तिजाग्रत्स्वप्नेषु । नियमादव्यभिचारेण परिबंभ्रमीति पुनःपुनर्भ्रमति । तास्वपि दशासु अहङ्कृतिपुरःसरणात् देहधर्मस्याहङ्कारस्य प्राधान्यात् । त्रिपुट्यां प्रमातृप्रमाणप्रमेयरूपायां संसारकलापसंपुटिकायाम् । मेयोन्नतिं प्रमेयव्याप्तिम् । प्रमुखाक्रियांशम्—प्रधानःक्रियांशो यस्यास्मिन्कर्मणि तथा । कलयति विमृशति । देहस्य प्रमातृत्वे तद्धर्मस्य विमर्शस्य जडत्वाज्जडपक्षस्य प्रेमयस्य व्याप्त्यनुसन्धानं भवतीत्यर्थः ॥ ८ ॥

इदानीं सर्वस्यान्तःकरणस्य मन एव प्रमाणभूतं मनस एवाहङ्कारादयो भूमिकाः मनसो विमर्शप्रथमरूपत्वाद्विमर्शवैभवं मनोवैभवमिति व्युत्पादयति ।

मेयादीति । मेयादिका मेयमानमातृरूपा त्रिपुटी त्रयाणां मेयादिपुटानां समाहारस्त्रिपुटी । सततयुक् । अन्योन्याविनाभावस्वभावा । तां त्रिपुटीम् । मनः विमर्शस्य मूलरूपम् मूढं जाड्यपर्यायमौढ्यभूमिकापरिग्रहेण । अहङ्क्रियात्म—अहङ्कारस्वरूपं सत् । मेयादि भासयति । प्रमेयादिकं यथा तथा भासयति । मेयव्याप्तिं दर्शयतीत्यर्थः । मनस एवानुसन्धानमहङ्कार आरोप्यत इत्यर्थः । अथ तदेव मनः निजस्वभावादजडरूपात् ।

मात्रादि भासयति चाथ निजस्वभावा—
द्बुद्धिश्च मध्यमपदे मन एव बोध्यम् ॥ ९ ॥
तस्मात्पकारवपुषः प्रकृतेः प्रमातु-
रात्मा मकारवपुरन्तर एव लीनः ।

---

अजडरूपं निजस्वभावं परिगृह्येत्यर्थः । तां त्रिपुटीमित्यनुवर्तते । मात्रादि भासयति प्रमात्रादिकं यथा तथा भासयति । चित्प्रमातृव्याप्तिं दर्शयतीत्यर्थः । मन एव मध्यमपदे जडाजडसमानपदे । जडाजडपदपरिग्रहेणेत्यर्थः । बुद्धिश्च प्रमेयप्रमात्रोः समव्याप्तिप्रदर्शिका बुद्धिश्च मन एवेति बोध्यम् ॥ ९ ॥

उक्तप्रमेयं कारणीकृत्य पवर्गप्रकृत्यादितत्त्वसन्निवेशं दृढीकृत्योपदर्शयति—

तस्मादिति । तस्मात्पूर्वोक्तप्रमेयरूपात्कारणात् । पकारवपुषः पकारप्रतिपाद्यायाः प्रकृतेः । पकारवपुषः पकारस्वरूपाया इत्युपचारः । प्रमातुः देहपर्यायप्रकृतिरूपस्य प्रमातुः । अन्तरएव व्याप्यपद एव । मकारवपुर्मकारस्वरूपः । अत्राप्युपचारः । आत्मा पुरुषः । लीनः व्याप्त इत्यर्थः । तन्मध्यतः तयोः प्रकृतिपुरुषयोर्मध्यभागे । अहङ्कृतिधीहृदाम्—अहङ्कारबुद्धिमनसाम् । स्थितिसन्निवेशः स्यात् । यद्यपि मकारस्यात्मनो व्याप(क)कवर्गे प्रमातृपदे सन्निवेशः तथापि पवर्गव्यापक(क)वर्गयोर्मध्ये सन्निवेशादुभयपक्षप्रक्रियासम्बन्धो वेदितव्यः । स्पर्शकदम्बकस्य प्रमाणपदत्वान्मकारस्य प्रमातुस्तत्प्रकाशानुसारेण परिगणना । तथापि प्रमाणपदक्रियासम्बन्धमात्रं ताटस्थ्यादङ्गीकर्तव्यमेव । अतः प्रकृतिव्याप्तिः पुरुषपर्यन्तं प्रवहतीति निरवद्यम् । चतुरश्रचक्रसन्निवेशे

तन्मध्यतःस्थितिरहङ्कृतिधीहृदां स्या-
देतत्प्रमातृपदमिन्द्रियलग्नविश्वम् ॥ १० ॥
एतच्च मातृपदमिन्द्रियसंश्रितं च
तत्संश्रयश्च मन एव तदिन्द्रियं स्यात्।
तद्ग्रामणीन्द्रियकुलस्य विमर्शशक्ति-
श्चिच्चैत्यमिश्रमखिलं खलु तद्विलासः ॥ ११ ॥

---

तु मनोबुद्ध्योरेवात्मपुरुषरूपयोरहङ्कारप्रकृतिभ्यां व्याप्तिस्ताभ्यां च तदुभयव्याप्तिरिति विवेकः। अथैतस्मिन्नेव प्रकृत्यन्ते मनोबुद्ध्योः स्वप्नपद इव ब्रह्माण्डोन्मीलनचमत्कारं दर्शयति—एतदित्यादि। एतत्प्रमातृपदं प्रकृत्यन्तरूपम्। इन्द्रियलग्नविश्वं मनोबुद्धिरूपज्ञानक्रियेन्द्रियसम्बद्धं विश्वम्। भवतीति शेषः ॥ १० ॥

अथ यदेतदन्तर्बाह्यजगद्विलसितं तत्सर्वं मनोमूलमेवेति प्रतिपादयति—

एतच्चेति एतच्चमातृपदं प्रकृत्यन्त रूपं प्रमातृपदम्-इन्द्रियसंश्रितं च मनोबुद्धिरूपेन्द्रियविलासत्वात्तत्संश्रितं तयोर्मनोबुद्ध्योः संश्रितं तत्संश्रयश्च तयोर्मनोबुद्ध्योः संश्रयः आश्रयश्च। एतद्द्वयं निजसमाश्रयमेव कुर्वन्नित्युक्तत्वात्। तद्द्विरूपमिन्द्रियमपि पर्यालोचनायां मन एव स्यात्। मनस एव दशाविशेषो बुद्धिरित्युक्तत्वात्। इन्द्रियकुलस्य अन्तर्बाह्यकरणजालस्य। ग्रामणि प्रवर्तकम्। तत् मनः। विमर्शशक्तिः—विचित्रविश्वोद्वमनानुचर्वणक्रियाप(स्फुर)णोन्मेषनिमेषसम्भ्रमा विमर्शशक्तिः। मन एव। चिच्चैत्यमिश्रं प्रमातृप्रमेयप्रमाणरूपमखिलम्। तद्विलासः तस्य मनसोविलासः खलु।

स्वप्ने च जागरणमातृपदे च वेद्य-
मिच्छात्मनो मनस एव विभाति कुक्षौ ।

---

तेनेयमिन्द्रियजालश्री जाग्रतिप्रविलसत इति प्रसिद्धिः ॥११॥

एवं स्वप्नप्रकृतिसंसारयोर्विश्वमिच्छात्मनो मनस एव गर्भे विलसतीति प्रबोधयति--

स्वप्ने चेति। स्वप्ने च जागरणमातृपदे जाग्रदवस्थायां यन्मातृपदमवैकारिकम् । पवर्गप्रतिपाद्यप्रकृतिसंसाररूपमित्यर्थः तस्मिंश्च वेद्यम् अन्तर्बहिःप्रपञ्चरूपम् । इच्छात्मन इच्छास्वरूपस्य मनसः कुक्षावेव गर्भ एव विभाति विलसति। स्वप्नप्रकृतिसंसाराविच्छासंसारावित्यर्थः । ज्ञाने ज्ञानेन्द्रियकर्मेन्द्रियसंसारौ ज्ञानक्रियासंसाराविति भावः । ननु स्वप्नस्य ज्ञानस्वरूपस्य मनःसंसारत्वं जाग्रतः क्रियासंसारत्वं विश्रान्तिरूपायाः सुषुप्तेरिच्छासंसारत्वमिति, प्रागुपदिष्टम् । इदानीं कथमन्यरूपोपदेश इति न मन्तव्यम् ।विश्रान्तेरेव बहिर्मुखताया इच्छासंसारः, स्वप्न एव ज्ञानसंसारः, जाग्रदेव क्रियासंसारः, जडाविश्रान्तिरजडविश्रान्तिश्चेति सुषुप्तिस्वप्नयोर्जडाजडविश्रान्त्यभिमाने जाग्रत एव ज्ञानक्रियेन्द्रियव्यापारव्यवस्थाया ज्ञानक्रियासंसारत्वम् । अथवा प्रकृतिसंसारस्य ज्ञानसंसारत्वम्, पार्थिवसंसारस्य क्रियासंसारत्वम् , जडाजडरूपसुषुप्तिरेव जडाजडेच्छासंसारत्वाभिमाने, स्वप्नोज्ञानसंसारः जाग्रत्क्रियासंसार इति विवेकः । तदत्र स्वप्नाविश्रान्तेरजडेच्छासंसारत्वाभिमाने स्वप्नवन्मानसिकसंसारत्वात् प्रकृतिसंसारस्यापि इच्छासंसारत्वमुक्तमिति निरवद्यम् । स्वप्न प्रकृतिसंसारयोरिच्छासंसारत्वेन ऐकरूप्ये प्राक्प्रतिपादितमेव भेदकमु-

पूर्वत्र मातृ मन एव शरीरताभाक्
प्रत्यक्षमुत्तरपदे तु शरीरमेव ॥ १२ ॥
चेतश्चमत्कृतिपदं वमति स्वलीनं
विश्वं बहिः श्रुतिमुखेन्द्रियवर्गभावात् ।

---

द्घाटयति-पूर्वत्रेति । पूर्वत्र स्वप्ने । शरीरताभाक् मन एव । मातृ प्रमातृ । उत्तरपदे प्रकृतिसंसारे तु प्रत्यक्षमानसिकत्वेनाभिमतं शरीरमेव प्रमातृ अनयोः संसारयोरयमेवेत्यर्थः ॥ १२ ॥

अथ पार्थिवसंसारप्रक्रियामुपक्रमते--

चेत इत्यादि । चमत्कृतिपदं चमत्काराणां स्थानम् । चेतः विमर्शस्य मूलरूपम् मनः, कर्तृ । स्वलीनं स्वान्तर्गतम् । प्रकृतिसंसारे स्वप्नसंसार इव लौकिकैरपि विश्वस्य मनोविलासमात्रत्वाभ्युपगमान्मनोनिष्ठत्वमिति मनोलीनत्वम्, मनः स्वस्वरूप एव विलसदित्यर्थः । विश्वं बहिर्वमति । विश्वस्य बहिर्वमनं च मनश्चमत्कारविशेषः । मनसः किं रूपेण बहिर्वमनमित्यत्राह-श्रुतिमुखेन्द्रियवर्गभावात् । श्रोत्रादिवागादिज्ञानक्रियेन्द्रियवर्गस्वरूपाङ्गीकारात् । श्रोत्रादिभूमिकापरिग्रहेणेत्यर्थः । श्रोत्रादिभ्य एव ज्ञेयरूपस्य विश्वस्य निर्गमः वागादिभ्य एव कार्यरूपस्य । नियमेन विश्वस्येन्द्रियप्रकाशान्तर्भासनादिन्द्रियकारणत्वम्, तथा चेन्द्रियरूपान्तर(त्वं)त्वाद्विश्वस्येन्द्रियप्रकाशादेव पर्यवस्यति । इन्द्रियप्रकाशोन्मेष एतत्स्फुरणम्, तदनुन्मेषेऽस्फुरणमित्यन्वयव्यतिरेकाभ्यां विश्वस्येन्द्रियप्रकाशकारणं न तु मायाविमोहितकाणादसम्प्रतिपन्नपरमाण्वादय इत्यलमतिप्रसङ्गेन ।

एवं परमार्थादिन्द्रियप्रकाशोद्वान्तस्य विश्वस्य पशुविषये

तत्रापि धीन्द्रियगणः पवनोऽपि पृथ्वी
ज्ञेयैर्जलैरपि मरुद्भिरुदीरितोऽन्तः ॥ १३ ॥
कर्मेन्द्रियाणि कठिनत्वपरान्तभाञ्जि
वह्न्याकृतीनि खपदस्थधराश्रितानि

---

विपरीतप्रतीतिप्रक्रियामाह—तत्रापीति। तत्र बहिःकक्ष्यायाम्। अपि शब्दोऽन्तःकक्ष्यासमुच्चयाभिधायकः। यथान्तःकक्ष्यायां प्रकृतिसंसारे पशोर्विपरीतप्रतीतिः तथा बहिःकक्ष्यायां पार्थिवाण्डसंसारेऽपीत्यर्थः। इन्द्रियगणो ज्ञानेन्द्रियवर्गः। पव(मा)नोऽपि परमार्थरूपे चिद्व्याप्ते संसारे वायुस्थानकोऽपि पृथ्वीस्थानं सङ्कोचभावात्प्राप्तः। ज्ञेयैर्ज्ञेयरूपैः वेद्यैर्जलैरपि चिद्व्याप्तौ जलस्थानकैरपि। अत्र विपरीतमरुद्भिः। व्याप्त्या वायुस्थानं प्राप्तैः। अन्तरुदीरितः स्वभ्यन्तरे क्षिप्तः। व्याप्तः इत्यर्थः। तवर्गरूपाणां ज्ञानेन्द्रियाणां चवर्गरूपैः शब्दादिभिर्व्याप्तिरित्यर्थः ॥ १३ ॥

इदानीं कर्मेन्द्रियाणां कार्यरूपवेद्यानां च वैपरीत्यमाह—कर्मेत्यादि। कर्मेन्द्रियाणि यवर्गप्रतिपाद्यवागादीनि। कठिनत्वपरान्तभाञ्जि कठिनत्वस्य परान्तः परमावधिस्तं भजन्तीति तथोक्तानि। क्रियायाः सङ्कोचनिर्वहणपदत्वात्कर्मेन्द्रियाणां कार्यरूपवेद्यानां चातिसङ्कोचभावादतिकाठिन्यम्। वह्न्याकृतीनि जडांशप्रधानवह्निमयानि। चिद्व्याप्तौ तु कर्मेन्द्रियाणामजडांशप्रधानवह्निमयत्वम्। वह्नेर्जडाजडमयत्वं प्राग्व्याख्यातम्। खपदस्थधराश्रितानि व्याप्तिलक्षणमाकाशपदमाक्रान्तवतीं पृथिवीमाश्रितानि। वागादीनां पशुपदेऽपि यद्यपि देहपर्यायप्रकृत्याश्रितत्वं तथापि कार्यवेद्यप्रधानभूतपृथिवीव्याप्त्यनुसन्धानात् पृथिव्याश्रितत्वं पृथि-

पृथ्वीमयप्रकृतिखग्रहणोन्मुखानि
बोध्यानि भूतविततेरिह वैपरीत्ये ॥ १४ ॥
मानात्मकस्य तरणेर्द्वयतो हि सिद्धिः
मायाबलात्प्रथमतात्र च मेयकोट्याः ।

---

वीत्यादि चिद्व्याप्तिपदे पूर्णरूपतया च उपचरितरूपिण्याः महापृथिव्या एव पार्श्वे पृथिवीमय्याः प्रकृतेः ग्रहणे व्याप्तौ उन्मुखानि भूतविततेरिह वैपरीत्ये बोध्यानि ।

अत्रायाभिप्रायः पशोर्ज्ञानेन्द्रियाणि ज्ञेयेषु शब्दादिषु किञ्चिदेव ज्ञातुं क्षमन्ते न तु सर्वम् । अतस्तानि तैः ज्ञेयैः व्याप्तानि । शब्दादय एव कार्यावस्थायां वचनादिभावेन स्थूलतां प्राप्याकाशादयो भवन्ति । कर्मेन्द्रियाणि च वचनादिमात्रमाकाशादिकं कर्तुं क्षमन्ते न तु महाभूतरूपमाकाशादि कर्तुम्, अतस्तानि च महाभूतैः कार्यैर्व्याप्तानि ।

एवं द्विविधमिन्द्रियवर्गं द्विविधेन वेद्यवर्गेण व्याप्तं सत् आत्मदेहरूपस्य प्रमातृद्वयस्य ज्ञेयकार्यवर्गाभ्यां व्याप्तिं समर्पयति चिद्व्याप्तौ तु आत्मा स्वसाधनैर्ज्ञानेन्द्रियैः ज्ञेयवेद्यं व्याप्नुवन् स्वात्मीकरोति अशेषज्ञेयस्य स्वात्मीकरणात्सर्वज्ञो भवति । देहश्च स्वसाधनैः कर्मेन्द्रियैः कार्यवेद्यं व्याप्नुवन् तत्स्वात्मीकरोति विशेषकार्यस्य स्वात्मीकरणात् सर्वकर्ता भवतीति ज्ञानक्रियेन्द्रियाणां प्रकृतिविकृतिभावप्रक्रिया वेदितव्या ॥ १४ ॥

अथ प्रमेयप्रमातृमिश्ररूपस्य प्रमाणसूर्यस्य कलासंस्थानप्रक्रियां व्युत्पादयति—

मानेत्यादि । मानात्मकस्य प्रमाणरूपस्य तरणेः सूर्यस्य

ग्राह्यग्रहीतृपदवर्णसमन्वयेन
योज्याः कला बहिरथान्तरपि क्रमज्ञैः ॥ १९ ॥
माता दशेन्द्रियमथो दशकं च मेयं
तन्मेलनाद् दशकलात्मदशारयुग्मम् ।

---

द्वयतः प्रमेयप्रमातृभ्यां सिद्धिःस्वरूपलाभो हि । अत्र च माया-बलात् प्रमेयकोट्या एव प्रथमता प्रमातृकोट्या द्वितीयपदता । विसर्गव्याप्तिरेव प्रथमेत्यर्थः । अत्र प्रमाणसूर्यस्य द्विद्विवर्णप्रति-पाद्यानां कलानां योजने ग्राह्यग्रहीतृत्वपदवर्णसमन्वयेन–ग्राह्य-स्थानकानां वर्णानामनन्तरं ग्राहित्वस्थानकवर्णानां यथायोगं समन्वयेन । बहिः कवर्गादितवर्गान्तरूपे पृथिव्यन्ते । अन्तरपि पकारादिभकारान्तरूपे प्रकृत्यन्ते । क्रमज्ञैः ग्राह्यग्राहकवर्णक्रम-विद्भिः । कला योज्याः । कवर्गटवर्गवर्णानां यथाक्रमं योगः चवर्गतवर्गाणानां च तथा । पकारबकारयोर्योगः फकारभकारयो-श्च तथा । एवं च दशारयुग्मं रवेः रश्मिचक्रं चतुरस्रम्, बिम्बच-क्रम् । यत्तु ककारादिडकारान्तैरनुलोमपठितद्वादशवर्णैः भकारा-दिडकारान्तविलोमपठितद्वादशवर्णानां योगेन द्वादशानां सूर्यकला-नां प्रकल्पनापारम्पर्यं तत्प्रमेयप्रमात्रात्मनः सूर्यस्य स्वरूपभूतेषु चतुर्विंशतिस्पर्शाक्षरेषु अधं प्रमेयकोटि ऊर्ध्वं प्रमातृकोटिरुभयपक्ष-समन्वयाद्द्वादशकलानिर्वृत्तिरिति विद्यमानमपि चक्रसंस्थानसं-वादं न लभत इति मातृकाचक्रमर्मविद्भिर्महानुभावैरुपेक्षितमि-त्यलं महामार्गविसंवादकथया ॥ १९ ॥

बहिरन्तरपि ग्राह्यग्रहीतृपदवर्णसमन्वयेन कला योज्या इति पूर्वसूत्रेण सूचितम् । कलायोजनप्रकारं चक्रे संस्थाने

अन्तः कलाद्वयमिह प्रकृतौ निलीन
स्त्रैगुण्यमातरि पुमाँश्चतुरस्रबिम्बे ॥ १६ ॥

---

संवादयन् मातान्तरव्याक्षेपाभिप्रायेण स्फुटमुपदिशति—

मातेत्यादि। मातृमेयात्मको हि रविः माता च बहिस्तवर्ग टवर्गप्रतिपाद्यदशेन्द्रियमयः। मेयं च तथा चवर्गकवर्गप्रतिपाद्यश-ब्दाद्याकाशादिकदशकमयम्, तन्मेलनात् यथाक्रमं पृथिव्यादिका-र्यवेद्यप्रतिपादककवर्गाक्षरपञ्चकेन वाय्वादिकर्मेन्द्रियप्रतिपादक-टवर्गाक्षरपञ्चकस्य मेलनात्। तथा गन्धादिप्रतिपादकचवर्गा-क्षरपञ्चकेन घ्राणादिप्रतिपादकतवर्गाक्षरपञ्चकस्य मेलनात्। पञ्च-पञ्चकलात्मकं सम्भूय दशकलात्मकं दशारयुग्मं भवति। अन्तः पवर्गरूपे प्रमातृपदे कलाद्वयं कार्यवेद्यबीजभूतप्रकृतिप्रतिपाद-केन पकारेण कर्मेन्द्रियबीजभूतबुद्धिप्रतिपादकस्य बवर्णस्य मेल-नादेकाकला, ज्ञेयवेद्यबीजभूताहंकारप्रतिपादकेन फकारेण ज्ञाने-न्द्रियबीजभूतमनःप्रतिपादकस्य भकारस्य मेलनादन्याकलेति कलाद्वयमिह चतुरक्षरनिष्पन्नकलाद्वयात्मके चतुरस्रबिम्बे त्रैगुण्य-मातरि त्रिगुणसवित्र्यां प्रकृतौ पुमान्मकाररूप आत्मा निलीनः। अहङ्कारसहितायां प्रकृतौ बुद्धिमनसोर्यन्निलयनं तत्पुरुषस्य निलयने पर्यवस्यतीति भावः। स्पर्शवर्णचक्रस्य प्रमाणचक्रत्वा-न्मनोबुद्धिरूपेणैव पुरुषस्यात्र चक्रे संस्थानं न तु मकाररूपेण। तथापि मनोबुद्ध्योः पुरुषस्यैव रूपान्तरत्वात्पुरुषस्यापि मका-रस्य प्रमाणप्रमातृचक्रयोर्मध्यवर्तित्वादुभयचक्रसम्बन्ध इति पु-मान्निलीन इत्युक्तम् ॥ १६ ॥

मानात्मनैव चिदचित्स्थितिरत्र चक्रे
भेदात्मके न भवतीह विसर्गबिन्द्वोः ।
मस्यानुषक्तिरपि मुख्यसमन्वयस्य
बिन्द्वेकभोगपदमातृपुरोचितस्य ॥ १७ ॥

---

पूर्वसूत्रे सूचितं मकारप्रतिपाद्यपुरुषतत्त्वस्यैव प्रमाणप्रमात्रोरुभयचक्रसम्बन्धं स्फुटीकरोति ।

मानेत्यादि । अत्र भेदात्मके चक्रे । प्रमाणचक्रस्य ग्राह्यग्रहीतृभेदाविनाभावभूमित्वात् दशारयुग्मरूपत्वम् , न तु चतुर्दशाराऽष्टारवदेकैकचक्रत्वम् अतो भेदात्मके प्रस्फुटभेदस्वरूपम् । अत्र प्रमाणचक्रे चिदचितोः प्रमातृप्रमेययोः स्थितिः । मानात्मनैव इन्द्रियरूपेणैव । इन्द्रियाणां प्रमाणपर्यायाणां ग्राह्यग्राहकोभयसिद्धरूपत्वात् ग्राह्यग्राहकरूपेणैव प्रमेयमातृस्थितिरित्यर्थः । अतः कारणादित्यौचित्यादध्याहर्तव्यम् । इह प्रमाणचक्रे । विसर्गबिन्द्वोः बिन्दोरपि सतो भेदमयत्वात् विसर्गस्येत्यर्थः । मस्य मकारप्रतिपाद्यस्य पुरुषस्य । अनुषक्तिरनुषङ्गो न भवति । चतुर्विंशत्यक्षरात्मकद्वादशकलारूपे प्रमाणचक्रे पुरुषस्थानकस्य मकारस्य पञ्चविंशतितमस्य न संनिवेश इत्यर्थः । तर्हि तस्य मकारपुरुषस्यात्र चक्रे किं सम्बन्धाभाव एवेत्यत्राह—अपि मुख्यसमन्वयस्येति । प्राधान्येन सम्बन्धवतोऽपि प्रमाणचक्रे प्रकृतिव्याप्तिविषयत्वेन सम्बन्धवतोऽपि तत्र चक्रे नानुषक्तिर्भवतीत्यन्वयः । कुत इत्याह—बिन्द्वेकभोगपदमातृपुरोचितस्य—बिन्दोरेकभोगस्थानम्—अष्टाररूपं प्रमातृपुरम् तदुचितस्य । द्वौ हि सङ्ग्रहेण प्रमातारौ । अभेदानुसन्धाता भेदानुसन्धाता च तत्र मकारप्रतिपाद्यो भेदानुसन्धाता

स्वप्ने स्मृतं तदनु जाग्रति सत्यकल्पं
बन्धं प्रपद्य वपुषा स्वविमर्शशक्त्या ।
क्षित्या च तत्परवशो हृतमातृभावो
मध्यन्दिनद्युमणिरेषमकारबिन्दुः ॥ १८ ॥

---

अतः प्रसिद्धप्रमाता मकारप्रतिपाद्यप्रमातृपुरसन्निवेशमेवार्हति न तु प्रमाणपुरसन्निवेशम्, तत्र तद्रूपान्तरयोर्मनोबुद्ध्योरेव सन्निवेशः । सम्बन्धस्तु प्रमाणचक्रेऽपि मकारप्रतिपाद्यस्यास्त्येवेति निष्कर्षः १७

विसर्गव्याप्तिप्रकरणमुपसंहरन्नादितश्चिन्निगरणरूपं प्रकरणमेयं क्रोडीकृत्य दर्शयति—

स्वप्न इत्यादि । स्वप्ने स्मृतं मनसा सङ्कल्पितम् । तदनुजाग्रति सत्यकल्पं दृढानुभवारूढतया परमार्थवदेव भासनं न तु परमार्थता अन्तःकक्ष्यापरामर्शनिर्विकल्पचिदात्मनः शिवस्य नित्यनिरावरणत्वेन भासमानत्वात् बहिरवभासमानस्य प्रवृत्तिरूपविमर्शस्पन्दविप्रुषस्य चमत्कारप्रमातृत्वात् । अन्तः स्वविमर्शशक्त्यादिविमर्शशक्तेरेव स्वरूपेण वपुषा प्रकृतिपर्यायेण वाहिस्तु क्षित्या च एवं कक्ष्याद्वयेऽपि बन्धं प्रपद्य तत्परवशः तयोर्देहमहापृथिव्योः परवशः परतन्त्रः । हृतमातृभावः ताभ्यामेवापहृतप्रमातृभावः प्रमेयतां प्रापित इति भावः । मकारबिन्दुः मकारप्रतिपाद्योबिन्दुः, चित्तत्त्वं पुरुष इत्यर्थः । मध्यन्दिनद्युमणिः मध्याह्नकालसूर्यो जात इति शेषः । यथा मध्यन्दिनसूर्यः स्वरश्मिपटलेन स्थगितो नावभासते । तथायमपि चिदात्मा स्वस्या एव विमर्शशक्तेर्विजृम्भणरूपेण अन्तर्बहिः प्रपञ्चेन च मार्या(आवृत)मूलस्वरूपो जात इत्यर्थः ॥ १८ ॥

यत्पादिवर्गवमुखार्णचतुष्टयस्य
सङ्कोचवर्जनमिदं खलु तन्त्रनीत्या ।
तुर्यस्थितं हमुखशान्तचतुष्टयात्म-
योऽयं क्रमेण बहिरन्तरभेदसृष्ट्योः ॥ १९ ॥

इति श्रीमातृकाचक्रविवेक जाग्रद्विवेकश्चतुर्थः खण्डः ४

---

इदानीं प्रकरणान्ते चिद्व्याप्तिरूपमुत्तरप्रकरणप्रमेयमवतारयन् जाग्रच्चक्रे वक्ष्यमाणे स्वप्नचक्रे च विसर्गप्रमातुः प्रतिसिंहासनं तुर्यजाग्रत्स्वप्नरूपं पदद्वयं तत्र न्यायेन एकैकमातृकया समुन्मीलितं व्युत्पादयति —

यत्पादीत्यादि । पादिवर्गवमुखार्णचतुष्टयस्य विलोमेन पवर्गादिवर्गचतुष्टयं पवर्गतवर्गटवर्गचवर्गरूपं वर्गचतुष्टयं वकारलकाररेफयकाररूपं वर्णचतुष्टयं तस्योभयस्य । तन्त्ररीत्या एकया क्रियया । प्रयोजनद्वयासिद्धिरूपया तन्त्रनीत्या तन्त्रन्यायेन । इदं सङ्कोचवर्जनम् खलु स्पृष्टेषत्स्पृष्टताप्रयत्नकृतसङ्कोचत्यागः खलु । यत्तुर्यस्थितं हमुखशान्तचतुष्टयात्मवर्णकदम्बकं, पवर्गस्य वकारस्य च सङ्कोचत्यागरूपो हकारः । तवर्गस्य लकारस्य च सङ्कोचत्यागरूपः सकारः । टवर्गस्य च रेफस्य च सङ्कोचत्यागरूपः षकारः । चवर्गस्य यकारस्य सङ्कोचत्यागरूपः शकारः । कवर्गस्य देहप्रतिपादकलकारस्य च विसर्गप्रमातृरूपत्वात् तस्य च चिद्व्याप्तिपदे चित्स्वरूपएवान्तर्धानात्पदद्वयेऽपि हकार एव विलयनम् , अतो न तत्सङ्कोचत्यागरूपो वर्णोऽन्वेषणीयः ।

एवं स्पर्शसङ्कोचत्यागरूपमतं तसत्कोचत्यागरूपं हकारादिशकारान्तवर्णचतुष्टयं पदद्वयरूपं सत् , क्रमेण । बहिरन्तरभेदसृष्ट्योः

बहिरभेदसृष्ट्यां अन्तरभेदसृष्ट्यां च भेदजाग्रत्प्रतियोगिन्यभेदजाग्रत्पदे भेदस्वप्नप्रतियोगिन्यभेदस्वप्नपदे चेत्यर्थः । दशारयुग्मार्धपदे अष्टारार्धपदे चेति वेदितव्यम् । योज्यं योजनीयम् ॥ १९ ॥

सर्वोहि भेदपद एव भवः पुरस्ता-
त्पश्चादभेदमवगच्छति जातबोधः ।
शक्तिः शिवस्य महति प्रकृतिस्तदात्मा
भेदोग्रवन्दनमतोऽर्हति भेदतत्त्वम् ॥ १ ॥

संस्थापितां पुरत एव शिवेन मायां
पश्चात्करोति यजने द्वयतत्परो यः ।
सिद्धं न याति शिवसामयि ! किं समूढ-
स्तस्माद्यखे(जे)नमुखतश्चतुरस्रबिम्बम् ॥ २ ॥

ईकारथोष(ग)जविसर्गकलास्तविन्दुः
प्रत्याहृतं खलु विसर्गपदं कलाभ्याम् ।
सद्यो जगत्सपदि संभृतभेदसिद्धिः
क्लींकारमूर्तिरनिशं मनुरभ्युदीर्यः ॥ ३ ॥

येकारेकारगर्भं कलयुगलतमं मायया व्याप्तमौलिं
मन्त्रं मत्तोऽनुतिष्ठेदरुणमणिकृतामक्षमालां वहन्यः ।
भुञ्जानोऽसौ भुजिष्याप्रकृतिकमणिमाद्याख्यया संप्रसिद्धं
सिद्धीनां सिद्धलभ्यं दशकमभवतां प्राप्य दिव्यैरिहैव॥४॥

शिवानन्देन मुनिना देशिकादेशवर्तिना ।
चतुर्थं मातृकाचक्रविवेके व्याकृतं पदम् ॥ ५ ॥

इति चतुर्थः खण्डः समाप्तः ॥

---

# अथ पञ्चमः खण्डः ।

अक्षेषु वेद्यविलयः खलु शुद्धविद्या
देहे तदन्तविलयो भवतीश्वरत्वम् ।

---

अथ निवृत्तिरूपं तुर्यस्कन्धमारभमाणो निवृत्तिजाग्रदुपक्रमत्वान्निवृत्तिजाग्रदधिष्ठातारं शिवस्य सर्वकर्तृत्वभूमिकाभूतमीश्वराख्यं प्रमातारं तद्बाह्यदशाविशेषेण शुद्धविद्याप्रमात्रा सह लक्षयति—

अक्षेष्वित्यादि । अक्षेष्विन्द्रियेषु श्रो(पाण्यादिषु)वाग्वादिषु घ्राणादिषु । च । वेद्यविलयः वेद्यानां पृथिव्यादिभूतानां च विलयस्तदेकीकरणम् शुद्धविद्या, खलु शुद्धविद्याश्रयः प्रमाता शुद्धविद्येत्युपचारः । पार्श्वे इन्द्रियप्रकाशाद्बहिस्तत्सार्थक्येनावभासमानानां वेद्यानाम् । इन्द्रियप्रकाशकगर्भ एवावभासनेनैयत्यविमर्शनेन्द्रियप्रकाशाविमर्शरूपताध्यवसायादिन्द्रियैकात्म्यानुभवरूपा शुद्धविद्या पाशव्यामोहकर्तरि गुर्वनुग्रहमूलेन समुन्मिषतीति सैषा शुद्धविद्या वेद्येषु पशुदशायामिदम्प्रत्ययैकविषयेषु पाशवव्यावृत्तौ स्वात्मेन्द्रियप्रकाशतादात्म्याध्यवसायादहंप्रत्ययविषयतामप्यर्पयन्ती पाशनिवृत्तिप्रथमपदे मायोत्तीर्णमात्रे प्रमातरि द्योतमाना तदभिधानतामुपचारेण भजतीति तद्विवेकः ॥

ईशो हि विश्वमयदेहकृताभिमानो
जाग्रच्छिवस्य पशुजागरचक्रलग्नम् ॥ १ ॥
यद्ग्राह्यबाह्यपदमज्जनमन्तरन्त-
स्तच्चित्पदे जडपदे विपरीतमेतत् ।

---

एवं प्रमाणपदे प्रमेयनिमज्जनलक्षणं शुद्धविद्याप्रमातृपदं व्युत्पाद्य तदूर्ध्ववर्तनीमीश्वरदशां व्युत्पादयति—देह इत्यादि । देह प्रमातरि । तदक्षविलयः तेषां शुद्धविद्यादशाभ्यस्तप्रमेयस्वात्मीकरणानामक्षाणां विलयो निमज्जनमेकरसीकरणमीश्वरत्वं भवति । शुद्धविद्यादशायां प्रमाणपदानिमज्जितानां प्रमेयानां प्रमाणपदेन सह देहात्मरूपे प्रमातृपदे यद्देहांशे विनिमज्जनं तदीश्वरत्वमित्यर्थः । अत्र प्रथमप्रमेयात्मनो विश्वस्य किञ्चिदिदंप्रत्ययाधिवासिताहन्ताप्रत्ययविषयविषयत्वम्, देहपदे निमज्जितस्य विश्वस्य देहस्येव दृढाहम्प्रत्ययविषयत्वादीश्वरस्य देहाद्विश्वस्मिन्नपि चेष्टकत्वम् । अत एव सर्वकर्तृत्वमीश्वरस्येत्यवगन्तव्यम् । शुद्धविद्यापदे त्विदंप्रत्ययाहंप्रत्यययो रिदंप्रत्ययस्यैवोल्वण्यात् विश्वचेष्टकत्वानुदयः । ईश्वरस्यानयादीनां (कां)? विश्वशरीरस्य शिवजाग्रत्पदत्वात्पशुजाग्रत्पदे संश्लेष इति प्रतिपादयति—ईशोहीति । ईशो हि विश्वमये देहे कृताभिमानः शिवस्य जाग्रत् परिच्छिन्नदेहे कृताभिमानस्य पशोर्जागरचक्रे दशारद्वयात्मके लग्नं श्लिष्टं पशुजाग्रत्पदे शिवजाग्रतः श्लेषौचित्यादिति भावः । जडाजडपदयोः सुप्त्यादिदशात्रयेऽप्यन्योन्यश्लेषस्वभावता प्राक् प्रतिपादिता ॥ १ ॥

अथ निवृत्तिरूपस्य शुद्धविद्याप्रमातुः प्रमेयेष्वभ्यस्यमाना-

अक्षात्मवेद्यमिह शः स हि शुद्धविद्या
देहाविभिन्नकरणेन्द्रियमीश्वरः षः ॥ २ ॥

---

हम्भावस्य भेदो न प्रशान्त इत्यभेदजाग्रत्पदाधिष्ठातृत्वं नाभ्युपगतं चिद्व्याप्तिपदस्य बहि र्बहिरर्थानामन्तरन्तर्थेषु निमज्जनरूपं स्वभावं व्युत्पादयन् शवर्गे शुद्धविद्याद्यभेदप्रमातॄणां विषयविभागं दर्शयति—

यद्बाह्येत्यादि । अन्तरन्तःपदे बाह्यबाह्यपदमज्जनं यत् बाह्यबाह्यपदस्य यन्मज्जनम्, प्रमेयाणां प्रमाणपदे मज्जनं प्रमाणानां प्रमातृपदे मज्जनमित्यर्थः । तच्चित्पदे चिद्व्याप्तिपदे । भवतीति शेषः । जडपदे चैत्यव्याप्तिपदे । एतद्विपरीतम् । अन्तरन्तःपदस्य बहिर्बहिःपदे मज्जनं विपरीतम् । प्रमातृपदस्य प्रमाणपदे मज्जनम्, प्रमाणपदस्य प्रमेयपदे मज्जनमित्यर्थः । इह शुद्धविद्येश्वरसदाशिवशक्त्याह्वयस्य प्रमातृचतुष्टयस्य । साधारणपदे शवर्गे । अक्षात्म, इन्द्रियप्रकाशैकात्म । इन्द्रियप्रकाशे लब्धैकात्म्यमित्यर्थः । वेद्यं प्रमेयजातम् । शः । शवर्ण इति वेदितव्यम् । प्रमाणलब्धैकात्म्यप्रमेयस्थानीयः शवर्ण इत्यर्थः । यद्यपि चवर्गयकारसङ्कोचत्यागात्मनः शकारस्य शब्दादिमात्रवेद्यस्थानीयत्वं युक्तं तथापि सर्वप्रमेयोपलक्षणत्वेन चित्पदेऽहङ्कारे कवर्गलकारयोर्मज्जनाद्बहिरवभासमानश्चवर्गयकारयो रूपभेदशकारोऽपि सर्वप्रमेयोपलक्षण इति वेदितव्यम् । स हि शकारः शुद्धविद्याप्रमाता । प्रमातृप्रमाणप्रमेयरूपेण पदत्रयेण निष्पाद्यस्वरूपस्य प्रमातुः कथं प्रमेयमात्रप्रतिपादके शकारे स्वरूपोपपत्तिरित्यत्रोच्यते । वर्णचतुष्टयात्मकः सर्वोऽपि शवर्गः शुद्धविद्यादिप्रमातृचतुष्टयस्य साधा-

ज्ञानेन्द्रियं स हि सदाशिव आत्मनैक्ये
स्वात्मा खविश्रममयो ह इतीह शक्तिः ।

---

णरणपदे प्रत्येकं स्वरूपं (स्वरूपं) भवति । तथापि शुद्धविद्यादीनां चतुर्णां (प्रमा)प्रमातॄणां शकारादयश्चत्वारो वर्णा एकैकस्यैकैक एव स्वरूपसिद्धिहेतुभूतस्य विशेषस्य प्रतिपादक इत्युपचारात्त-त्तदेकैकवर्णरूपता तेषाम् । तथा हि शुद्धविद्याप्रमातुरिन्द्रियैका-त्म्यवेद्यत्वं स्वरूपसिद्धिहेतुर्विशेषः । अतस्तस्येन्द्रियैकात्म्यवे-द्यप्रतिपादकशकाररूपत्वम् । ईश्वरस्य प्रमातुर्देहाविभिन्नकार्यवेद्यै-कात्म्यकर्मेन्द्रियत्वं स्वरूपसिद्धिहेतुर्विशेषः । अतस्तस्य तादृ-क्कर्मेन्द्रियप्रतिपादकषकाररूपत्वम् । एतदेवाह देहाविभिन्न-करणेन्द्रियमीश्वरः ष ति ॥ २ ॥

अथ सदाशिवशक्तिप्रमातृस्वरूपं वर्णद्वयमाह ।

ज्ञानेन्द्रियमित्यादि । सदाशिवस्य प्रमातुरात्माविभिन्नसा-त्मीकृतज्ञेयवेद्यज्ञानेन्द्रियत्वं स्वरूपसिद्धिहेतुर्विशेषः । अतस्तस्य तादृग्ज्ञानेन्द्रियप्रतिपादकसकाररूपत्वं । एतदाह—आत्मनैक्ये आ-त्मना तादात्म्ये सति तादृशं ज्ञानेन्द्रियम् । स हि सकारो हि तादृ-ग्ज्ञानेन्द्रियप्रतिपादकः । सकारो हि सदाशिव इत्यर्थः । खविश्र-ममयः अपरिच्छिन्नचिदचित्सामरस्यरूपाकाशविश्रान्तिमयः । स्वा-त्मा देहात्मोभयलक्षणं स्वरूपम् । ह इति । हकार इति वर्णः । इह शवर्गे । शक्तिः शक्तिनाम प्रमाता । अपरिच्छिन्नविश्रान्तिमयदेहा-त्मसामरस्यलक्षणस्वरूपत्वं शक्तेः स्वरूपसिद्धिहेतुर्विशेषः । अ-तस्तस्यास्तादृक्स्वरूपप्रतिपादकहकाररूपत्वम् । एवं शुद्धविद्या-दीनां साधारणपदे वशर्गे तत्तत्स्वरूपसिद्धिहेतुविशेषप्रतिपा-

एतत्तुरीयपदमङ्गचतुष्टयाढ्यं
बाह्यन्तरालपदयोः श्रितरूपसाम्यम् ॥ ३ ॥
एतत्पदं पदमखण्डितमेव शुद्ध-
विद्यादिकस्य खलु तत्त्वचतुष्टयस्य ।

---

दक वर्णाश्रयणेन विषयविभागं व्युत्पाद्यास्य शवर्गरूपस्य पदस्य बाह्ये स्पर्शसङ्कोचत्यागरूपस्यान्तरन्तःस्थ सङ्कोचत्यागरूपस्य उभयत्र रूपसाम्यम् प्रागुपादिष्टमेव स्फुटप्रसययायोद्घाटयति—एतदित्यादि । अङ्गचतुष्टयाढ्यम् महाभूतचतुष्टयगर्भिण्या महापृथिव्याः प्रकृत्याश्च चित्पदे हकारे निमज्जनादुभयत्राङ्गचतुष्टयाढ्यम् । एतत्तुरीयपदम् ।अभेदजाग्रत्स्वप्नरूपं तुर्यपदम् । बाह्यान्तरालपदयोः स्पर्शान्तःस्थप्रतिपाद्यजाग्रत्स्वप्नपदयोः । श्रितरूपसाम्यम् । चवर्गस्य यकारस्यापि सङ्कोचत्यागे शकार एव टवर्गस्य रेफस्य सङ्कोचत्यागे षकार एव । एवमवशिष्टमुन्नेयम् ॥ ३ ॥

शवर्णशुद्धविद्यादीनां प्रत्येकस्वर एव साधारणं पदमित्युक्तम् । तदेवाह—

एतदित्यादि । एतच्चवर्गरूपं पदम् , अखण्डितमेव अविभक्तमेव । शुद्धविद्यादिकस्य तत्त्वचतुष्टयस्य पदम् । प्रमाणप्रमेयाङ्गस्य प्रमातुरेकवर्णमात्रेण दुष्प्रतिपादत्वात् । एवमपि शुद्धविद्यादीनामेकैकवर्णव्यवहारोपचारे प्राक्प्रतिपादितोपपत्तिमासूत्रयति—वेद्यादिति । वेद्याद्युदञ्चिताचितिस्फुरणं चैत्यव्याप्त्यवसाने यदा तदुन्मेषप्रारम्भः तदायं प्रारम्भो वेद्यादिक एव भवतीत्यनुभवः प्रमाणम् । तथा हि—पाशवावसाने साधको गुर्वनुग्रहसमुन्मिषि-

वेद्याद्युदञ्चितचितिस्फुरणक्रमेण
तत्तद्दशावतरणं विबुधैर्विभाव्यम् ॥ ४ ॥
सा(स)दाशिवः स खलु बिन्दुमयस्तवर्ग-
स्तत्रेश्वराङ्गमयमान्तरधामयोग्यः ।

---

तविवेकदृष्टिर्वेद्यमेव स्वात्मेन्द्रियप्रकाशे निमज्जयति । प्रमेयस्यैवं प्रमाणानिमज्जनाभ्यासादारूढशुद्धाविद्यास्वभावस्तदनन्तरं स्वात्मीकृतप्रमेयं प्रमाणं प्रमातृपदे निमज्जयितुमुद्युञ्जानः शरीररूपे तावत्प्रमातृभागे स्वात्मीकृतकार्यप्रमेयं कर्मेन्द्रियवर्गरूपं प्रमाणं निमज्जयति । अतो विश्वशरीरः सन् विश्वचेष्टकतयाविर्भूतसर्वकर्तृत्वशक्तिरारूढेश्वरताकक्ष्यस्ततः परं स्वात्मीकृतज्ञेयप्रमेयं ज्ञानेन्द्रियप्रमाणमात्मरूपे प्रमातरि निमज्जयति। अतो विश्वात्मकः सन्नाविर्भूतसर्वज्ञत्वशक्तिरारूढसदाशिवकक्ष्यो ज्ञानस्य प्रागभावेन क्रियां क्रियाप्रागभावेन ज्ञानं चानुसंन्दधानस्ततः परं ज्ञानक्रियासामरस्यभूमिमपरिच्छिन्नविश्रान्तिमयीमिच्छात्मिकां शक्तिक्रियामारोहतीति प्रक्रियया वेद्याद्युदञ्चिचितिस्फुरणक्रमेण तत्तदंशवर्णउत्क्रमर्यादया । शुद्धाविद्यादितत्तद्दशावतरणम् । विबुधैर्विद्वद्भिर्विभाव्यम् । उत्क्रमर्यादया वेद्यादिकं चित्प्रवहणे यं यं भागमधिकृत्य शुद्धविद्यादीनां स्वरूपलाभः तत्तद्भावरूपतत्तदावरणस्य तत्तत्प्रमातृपदत्वमौपचारिकमितिभावः ॥ ४ ॥

इदानीं बाह्ये ज्ञानेन्द्रियप्रतिपादकतवर्गसङ्कोचत्यागरूपस्य सकारस्य सदाशिवकलायाः सतोऽपि बहि स्तस्य प्राधान्यानौचित्यादीश्वराङ्गत्वम्, अन्तःपदे रेफाक्षरत्यागरूपस्य षकारस्येश्वरकलायाः सदाशिवाङ्गत्वमिति व्युत्पादयति—

ज्ञानाक्रिये न सुशिवस्य सदाशिवेशा-
वन्तर्बहिश्च नियताङ्गिपदौ क्रमेण ॥ ८ ॥
इच्छापपञ्चकवबिन्दुमयी हशक्ति-
र्ज्ञानक्रियासमपदं खलु सोभयात्मा ।

---

सदाशिव इत्यादि । बिन्दुमयस्त्यक्तसङ्कोच इत्यर्थः । तवर्गः । स खलु सकारः खलु । असौ सकारः सदाशिवस्वभावः । अन्तरधामयोग्यः । स्वमलक्षणज्ञानकक्ष्यासमुचितोऽयं सकाररूपः सदाशिवस्वभावः । तत्र बाह्यपदे । क्रियाप्रधाने । ईश्वराङ्गम् । ईश्वरस्याङ्गमेव । क्रियापदेज्ञानांशस्य न्यग्भावः । अत्रोपपत्तिमाह— सदाशिवेशौ शिवस्य ज्ञानक्रिये ।

ननु शिवस्य ज्ञानशक्तिलीलासरूपसदाशिवः क्रियाशक्तिविलासरूप ईश्वरः अस्तु प्रकृते का नामोपपत्तिरित्यत्राह-एतौ सदाशिवेशौ । क्रमेणान्तर्बहिश्च नियताङ्गिपदौ सदाशिवस्यान्तःकक्ष्यानियतमङ्गिपदं तस्य ज्ञानस्वभावात् । ज्ञानस्य चान्तःपदे प्राधान्यात् बहिःकक्ष्या त्वङ्गपदम्, ईश्वरस्य बहिःकक्ष्याङ्गिपदं तस्य क्रियास्वभावात् । क्रियायाश्च बाह्यपदे प्राधान्यात् । तस्यान्तःकक्ष्या त्वङ्गपदम् । अतो रेफसङ्कोचत्यागरूपस्य षकारस्ये श्वरकलायास्तत्राङ्गत्वमेवेति विवेकः ॥ ८ ॥

सदाशिवकलाया अन्तःप्राधान्यमीश्वरकलाया बहिःप्राधान्यमित्युक्तम् । इदानीं शक्त्याः कलाया इच्छात्मिकायाः साम्येन तदुभयमूलतया बहिरन्तरपि प्राधान्यमिति प्रतिपादयति—

इच्छेत्यादि । प पञ्चक व बिन्दुमयी । वर्णपञ्चकात्मनः पवर्गस्य वकारस्य च यो बिन्दुत्वम् । गुणप्रधानोऽयं निर्देशः । सङ्कोचत्याग

बिन्दौ समुन्मिषति सर्गपदे क्रमेण
संसृष्टिरापरिसमाप्तितयोर्विभाव्या ॥ ६ ॥

---

इत्यर्थः । तन्मयी तत्स्वरूपा । हशक्तिः हकारप्रतिपाद्या शक्तिदशा । इच्छा इच्छास्वभावा । सा इच्छाशक्तिः । ज्ञानक्रिया समपदं ज्ञान-क्रिययोः साधारण्येन मूलपदम् । इच्छां (विना) विज्ञानमपि न प्रवर्तते क्रियापि न प्रवर्तते इति ज्ञानक्रिययोः इच्छैवान्तरं कूटस्थं रूपम् । अत एव सा उभयात्मा उभयस्य ज्ञानस्य क्रियायाश्च-आत्मा मूलस्वरूपम् । अतस्तस्या ज्ञानपदेऽन्तः क्रियापदे बहिश्च प्राधान्यमेव नाङ्गत्वमिति भावः ॥

इदानीं विसर्गपदे विद्यादिक्रमेण बिन्दून्मेषे प्रवृत्ते सत्यसौ बिन्दून्मेषः क्रमप्रवृत्तिशाली यावत्सर्वमपि पदं व्याप्नोति ताव-द्विसर्गगन्धस्यानुवृत्तत्वाद्बिन्दुविसर्गयोः संसृष्टिरेव न बिन्दोरे-काधिपत्यमिति व्युत्पादयति—बिन्दौ इत्यादि । सर्गपदे क्रमेण बिन्दौ समुन्मिषति सति । आपरिसमाप्ति सर्वत्रपदे बिन्दुव्याप्तिनिष्प-त्तिपर्यन्तम् । तयोर्बिन्दुविसर्गयोः । संसृष्टिः । त्रिपुटीरूपे पदे क्वचित् बिन्दून्मेषः क्वचिद्विसर्गस्फुरत्तेति संसृष्टिः । विभाव्या ऊहनीया । अयमर्थः शुद्धविद्याप्रमातरि वेद्यानामिन्द्रियप्रकाशनिमज्जनेन वेद्यांश एव चिदुन्मेषः, इन्द्रियाणां प्रमातृपदे निमज्जनाभ्यास-पाटवाभावादिन्द्रियादिकेषूत्तरोत्तरपदेषु भेदस्याप्रशमाद्विमर्गस्य स्फुरत्तेति बिन्दुविसर्गसंसृष्टिः, ईश्वरदशायां शुद्धविद्योत्तरपदत्वा-त्प्रमेयेषु चिदुन्मेषः सिद्ध एव । विशेषस्तु स्वात्मीकृतस्वविषयाणां कर्मेन्द्रियाणां देहात्मकप्रमातृपदे निमज्जनम् स्वात्मीकृतस्वविष-याणां ज्ञानेन्द्रियाणामात्मरूपे प्रमातृपदभागे निमज्जनं तत्प्राधा-

पूर्वत्र नैवाहि परो नियतः परत्र
पूर्वो भवेन्नियत एव शषादिवृन्दे ।

---

न्येन अपाटवमेवाप्रधानम्, अतस्तदाद्युत्तरपदे भेदस्फुरत्तेति विसर्गसंसृष्टिः सदाशिवदशायामीश्वरदशापर्यन्तचिदभेदोन्मेषः सिद्ध एव । विशेषस्तु स्वामीकृतज्ञेयानां ज्ञानकरणानाम्, विश्वमयस्य च स्वात्मप्रमातृपदे निमज्जनम्, तस्या अपि दशाया निराकुलचिद्विश्रमरूपेच्छाशक्तितत्त्वैकात्म्यं सावशेषमिति तदंशे भेदगन्धाद्विसर्गस्पर्शः शक्तिदशायां तु विश्रमरूपत्वादपरिच्छिन्नायामेवभेदसाम्राज्यमिति तात्पर्यम् । तं बिन्दून्मेषपदे विसर्गानुवृत्तितारतम्याविवेकशुद्धविद्यादितत्त्वानां प्रस्फुटज्ञानकारणमिति तस्य तत्कर्तव्यत्वेन चोदना ॥ ६ ॥

शुद्धविद्यादिषु बहिर्बहिर्दशायामन्तरन्तर्दशा नान्तर्भवन्ति(ति)। अन्तरन्तर्दशायां तु बहिर्बहिर्दशान्तर्भवतीति व्युत्पादयति—

पूर्वत्रेत्यादि । शषादिवृन्दे शषादिप्रतिपाद्ये शुद्धविद्यादिवृन्दे । पूर्वत्र शुद्धविद्यादौ, पूर्वदशायाम् । परः परदशा । नैव हि नियतः । न नियता । शुद्धविद्यायामीश्वरदशा न नियता । ईश्वरदशायां च सदाशिवदशा, सदाशिवदशायां शक्तिदशा च तथेत्यर्थः । परत्र तु ईश्वरादिदशायां तु । पूर्वः । शुद्धविद्या । दिदशानियत एव भवेत् । नियमेन भवेदेव । ईश्वरदशायां शुद्धविद्यादशाऽन्तर्भुतास्त्येव, सदाशिवदशायां चेश्वरदशा, शक्तिदशायां च सदाशिवदशेति योजना ।

इदानीं वेद्योपक्रमेण संविदुदये क्रमं विना वेद्यादिप्रतिपादकं सर्वमपि शषादिवृन्दं संविन्मयूखानां निराघाट(निर्बाध)प्रसरणेन

एकत्र संविदुदयेऽप्यपरत्र भास-
स्तस्या इतीदमथवा सम मेव बिन्दुः ॥ ७ ॥
जाग्रच्छिवस्य पशुजागरयुक्तदेश-
मन्तर्दशारमिह कोणगतं बहुत्वम् ।

---

युगपदेव सङ्कोचति त्यजतीति पक्षान्तरमुपक्षिपति—एकत्रेति । एकत्र वेद्यभागे । संविदुदये सति । अपरत्रापि प्रमाणादिपदे सर्वत्रापि । तस्याः संविदो भास इति । भासः प्रवहन्तीति (शेषः) । इदं शषादिवृन्दं शषाद्यक्षरचतुष्टयम्, अथवा पक्षान्तरेण । सममेव युगपदेव । बिन्दुः बिन्दुशब्देन त्यक्तसङ्कोचत्वं लक्ष्यते । त्यक्तसङ्कोचो भवतीति शेषः । अयमर्थः । वेद्यपदोपक्रमेण बिन्दून्मेषे शुद्धविद्यादिदशानां कालविलम्बापेक्षः क्रमो न नियतः । कचित्प्रमातरि भाग्याधिके शक्तिपातस्य तीव्रतया शुद्धविद्यादिदशानां निर्विलम्बेन क्षणादाविर्भावो युगपदेव सम्भवति, कचित्तु क्रमापेक्षया शनैः सम्भवतीति पक्षद्वयमत्रानुसन्धेयम् ॥ ७ ॥

इदानीं शकाराद्यक्षरचतुष्टयाधिष्ठातुरीश्वरस्य बह्वक्षरसन्निवेशवति दशारयुग्मरूपे पशुजागरचक्रे कथं सन्निवेशौचित्यमित्याशङ्क्य तदुपपादयति ।

जाग्रदित्यादि । शिवस्य । जाग्रत जाग्रदवस्था । पशुजागरयुक् पशुजागरावस्थया युक् योगिनी । यतः श्लिष्टमित्यर्थः । (तत्) तस्मात्कारणादन्तर्दशारं दशेन्द्रियसन्निवेशपदं व्याप्य दशारम् । ऐशं ईश्वराधिष्ठातृकम् । इहेश्वराधिष्ठातृके दशारचक्रपदे । भेदोदयोल्लसितं भेदविजृम्भणेन समुदञ्चितम् । यत्कोणगतं बहुत्वं कोणबाहुल्यम् । एतदभेदकोट्याम् अभेदपक्षाविर्भावे । सङ्ग्रहम् । अभेदपदोचितं

भेदोदयोल्लसित मेतद्भेदकोट्यां
प्राप्नोति सङ्कहमिति प्रतिपद्रहस्यम् ॥ ८ ॥
यः पार्थिवे चिदुदयः स हि शुद्धविद्या
यः प्राकृते स पुनरीश्वरता किलाऽण्डे ।

---

बाहुल्यत्यागं प्राप्नोतीति प्रतिपद्रहस्यं ज्ञानरहस्यम् । अयमर्थः विसर्गव्याप्तौ सकलभेदसमुज्जृम्भस्थले चतुर्विंशत्यक्षरात्मके स्पर्शकदम्बके पञ्चवर्गसंविभक्तं यत्पञ्चाङ्कं पदं चतुरस्रे दशारयुग्मस्य चतुर्षु कोणपञ्चकेषु व्यवस्थितम् । पशुजागरशिवजागरे तु भेदसङ्कये सति चतुरश्रपदं पादिवर्णचतुष्टयं हकारत्वेन परिणमते । बहिर्दशारकोणपञ्चगतः कवर्गश्च हकारेऽन्तर्भवति । अवशिष्टकोणपञ्चकगतश्चवर्गः शकारत्वेन परिणमति । अन्तर्दशारे कोणपञ्चकगतष्टवर्गः षकारत्वेन परिणमिति । अवशिष्टकोणपञ्चकगतस्तवर्गः सकारत्वेन परिणमति । मकारो हकाररूपेण परिणामिनि पवर्गे च सम्बन्धमुपलभते । प्रमातृकक्ष्यायां च वक्ष्यमाणत्रिकोणबिम्बे सम्बन्धमुपलभत इति । विसर्गपदे त्रिन्द्वाविर्भावप्रक्रिया चतुरश्रदशारयुग्मरूपं चक्रत्रयं कोणचतुष्टयाकारेण परिणमति । विसर्गपदे बिन्दुपदे च वर्णानां कोणानां चैकरूप्येण भवितव्यमिति ये म न्यन्ते ते भेदाभेददशयोरप्याविशेषं प्रतिपद्यन्त इत्यलम् ॥ ८ ॥

इदानीं पक्षान्तराश्रयणेन इन्द्रियदेहात्मनि मज्जितप्रपञ्चानां शुद्धविद्येश्वरसदाशिवानां पृथ्वी(भू)प्रकृतिमायान्ताश्चिन्मयीकृता विषया इत्युपकल्पयति—

यः पार्थिवेत्यादि । बहिरिन्द्रियविषयरूपे पार्थिवाण्डे यश्चिदुदयः।

यो माथिके स तु सदाशिवतेति शादे
स्त्रीरूपधीरतिरहस्यतमं गुरूणाम् ॥ ९ ॥

---

चिद्व्याप्तिः । स हि स खलु । बिन्दूदयः शुद्धविद्या । शुद्धविद्याया मि-न्द्रियप्रकाशैरेकाकारीकृतप्रमेयत्वलक्षणात् । पार्थिवाण्डे प्रमातृस्था-नीयः पवर्गः सम्बन्धवानेव त्रिपुट्यां नित्यं तत्सम्बन्धनियमात् । अतस्त्यक्तसङ्कोचे पार्थिवाण्डे चतुर्वर्णरूपस्य सर्वस्य शवर्गस्य स-म्भवः। एवंचास्मिन्पक्षे शुद्धविद्याप्रमातुर्भेदप्रशमोपक्रमपदत्वात्पशु-जाग्रच्च त्रिकोणबाहुल्ये सत्येव सन्निवेशोपपत्तिरिति च विसर्ग-स्पर्शः शवर्गाकारेण परिणमदवस्था शुद्धविद्या प्रमातरि भेदशि-रोदर्शनमुपलभन्त इति मुख्यया वृत्त्या स्वीश्वरस्यैव शिवजाग्र-त्पशुजाग्रच्चक्रसंश्लेषः शुद्धविद्या(या)स्त्वपरिणतविवेकानामङ्गी-काराय पाक्षिकस्तत्संश्लेष इत्यलम् । यः प्राकृतेऽण्डे चिदुदयः शव-र्गाकारेण सङ्कोचत्यागः । स पुनरीश्वरता किल । अत्रोपपत्तेः प्र-तिभासमात्रगम्यत्वात् । किलेति साम्प्रदायिकमैतिह्यम् । अत्र पवर्गस्य शवर्गाकारेण सङ्कोचत्याग एवमभ्यूह्यः—मकारस्योष्ठ्य-वर्णस्य सङ्कोचत्यागः कण्ठ्यवर्णो हकार इति सुगमम् । पकार-स्य प्रकृतिवर्णस्य हकारे चित्पदेऽन्तर्भावः । फकारादिवर्णत्रयस्य शकारादिवर्णत्रयत्वे युक्तिरुच्यते । फकारबकारभकारा जला-ग्निवायवः शकारषकारसकाराश्च तथा । अतः फकारादिसङ्कोचत्या-गरूपत्वं शकारादीनाम्, समानतत्त्वप्रतिपादकत्वात् शकारादी-नां जलादिप्रतिपादकत्वम् । प्रागुक्तभूतवैपरीत्याभावविमर्शे स्फुटं फकारादीनां रूपमुच्यते । अल्पप्राणो वर्गप्रथमवर्णः अल्पवृत्तित्वे-तरभूतापेक्षया पृथिवी अतस्तत्प्रतिपादकः । महाप्राणो वर्गद्विती-

बिन्दूदये विशति सर्ग इमं तथैव
सर्गोदये तमथ सोऽपि पदे तदन्तः ।

---

यवर्णः पृथिव्यपेक्षया महावृत्ति च जलम्, अतस्तत्प्रातिपादकः । नादवान्वर्गतृतीयवर्णः महाप्राणान्नादोऽधिकवृत्तिः जलादधिकवर्तिवृत्तिश्चाग्निः अतः स तत्प्रातिपादकः । नादवान्घोषवाँश्च वर्गचतुर्थवर्णः केवलनाद[भवः नाद]वतो घोषवानाधिकवृत्तिः अग्नेरधिकवृत्तिश्च वायुः अतस्तत्प्रातिपादकः । उक्तसकलधर्मसंसृष्टिरूपपवर्गपञ्चमम् । अतः पृथिव्यादिभ्यश्चतुर्भ्योऽधिकवृत्तिराकाशः । अतः पञ्चमवर्णः आकाशप्रातिपादक इति । अतः फकारादिप्रतिपाद्यतत्त्वप्रतिपादकतया सङ्कोचत्यागरूपत्वाच्च शकारादयः फकारादि परिणातिरूपा इति लभ्यते । ईश्वरस्य विश्वमयप्रकृत्यभिमानलक्षणत्वात्त्यक्तसङ्कोचं प्रकृत्यण्डमीश्वरपदत्वमर्हतीत्यभिप्रायः । योमायिकेऽण्डे चिदुदयः स तु सदाशिवता । मायिकाण्डस्य स्वप्रस्यात्मप्रकाशपदत्वात्सदाशिवस्य विश्वात्मत्वलक्षणात्त्यक्तसङ्कोचो मायाण्डः सदाशिवपदमिति । शादेः शकारादिवर्णचतुष्टयस्य । त्रैरूप्यधीः पृथिव्यण्डे प्रकृत्यण्डे मायाण्डे च सिद्धस्य त्रैरूप्यस्य ऐकरूप्ये सत्येव स्थानकृतत्रैविध्यस्य यादिर्विवेकः । सादीतीह शुद्धविद्यादिदशाविवेकप्रस्तावे गुरूणां रहस्यतममति रहस्यम् ॥ ९ ॥

इदानीं शवर्गे कवर्गस्य देहप्रातिपादकलकारस्य शङ्का-(सङ्कोच)त्यागरूपवर्णादर्शनात् तद्दर्शनोपपात्तिमाह ।

बिन्दूदय इत्यादि । बिन्दूदये बिन्दुव्याप्तौ । इमं बिन्दुम् । पूर्वमेतद्व्यापकसर्गो विशति । बिन्दावेकीभवतीत्यर्थः । पूर्वं बिन्दुगर्भा-

कः स्या द्धकारहृदि लश्च वकारगर्भे
बाह्ये तु चित् प्रकृतिसर्गमुखे विभक्ता ॥ १० ॥
अन्तः पदं भवति तच्चतुरङ्गमैक्या-
च्चिच्चैत्ययोः करुणसीम्न्यपि भावितैक्यम् ।

---

देव बहिर्विश्वस्रष्टा विसर्गः पुनस्तमेव विशतीत्यर्थः । तथैव । सर्गो-दये विसर्गव्याप्तौ । तं विसर्गम् । अथानन्तरम् । सोऽपि बिन्दुरपि । विशतीत्यर्थः । तत्तस्मात्कारणादन्तःपदे बिन्दुव्याप्तिस्थले । कः । जलादिभूतचतुष्टयप्रतिपादकेनफादिवर्णचतुष्टयेनात्तगर्भः पृथि-वीप्रतिपादकः ककारो हकारहृदि स्यात् । तत्रान्तर्गतो भवतीत्य-र्थः । स्वप्रस्याप्यान्तरपदत्वात् । तत्रापि विसर्गप्रमातुर्लकारस्य गर्भे स्थितिमाह—लश्च वकारगर्भ इति । लः लकारो वकारगर्भे च चकारात् हकारगर्भे च अन्तःस्थसङ्कोचत्यागरूपे शवर्गे च हका-रगर्भे लकारान्तर्धानं भवतीत्यर्थः । विसर्गस्य बिन्दुसमावेशे तदेकरसत्वमेव । बिन्दोर्विसर्गसमावेशे विशेषमाह—बाह्येत्विति । बाह्ये विसर्गव्याप्तिस्थले । तु । चिद्बिन्दुः । प्रकृतिसर्गमुखे प्रकृति-रूपस्य विसर्गस्य मुखे । संमुखे तिष्ठन्नपि । विभक्ता । प्रकृतौ ना-न्तर्भवति । अपि तु विभक्तरूपेण दृश्यते । मकारो हि पकर-रूपिण्याः प्रकृतेश्च तत्समीपस्थितिसूचितस्याबहिर्मोक्षणस्य कर्तृत्व, तया नाऽन्तर्धीयते न तत्रैकरस्यात् स्वरूपहानिं लभते । पृ-थिवीरूपस्य विसर्गबिन्दुना बहिर्विसृष्टस्य न बिन्द्वेकरसीकरणं पवर्गरूपे बिन्दोर्दर्शनात् । अतो विसर्गव्याप्तौ न बिन्दुस्वरूपतो लोप इति भावः ॥ १० ॥

अथ विसर्गस्य बिन्दुनिलयनान्तःपदस्य चतुरङ्गत्वं विस

पञ्चाङ्गकं भवति बाह्यपदं प्रकृत्यां
चिद्बहिर्गर्भकुहरादथ निर्गतायाम् ॥ ११ ॥
ज्ञानक्रियोन्मुखहकारमयाद्वयेच्छा-
विश्रान्तिरन्तरबहिर्मुखविश्रमात्मा ।

---

र्गबिन्दोरनिलयनेन बाह्यपदस्य पञ्चाङ्गत्वमिति प्रागुक्तमपि प्रमेयं प्रस्फुटप्रतिपत्तये पुनरुल्लासयति—

अन्तरित्यादि । तत्तस्मात्कारणात् बिन्दौ विसर्गनिलयनरूपाद्धेतोः । अन्तः पदं चतुरङ्गं भवति । कुत इत्याह चिच्चैत्ययोरैक्यात् चितश्चैत्यैकरसीकरणसामर्थ्यसम्भवात् । किम्विधमन्तः पदम् । करणसीम्न्यपि भावितैक्यं विसर्गप्रमातुः सर्वव्यापिपदस्योपलक्षणेन चिन्मज्जनेन बहिर्भासमाने करणत्रयपदेऽपि विभावितचिदैक्यम् । विसर्गपदस्य कवर्गहकारमज्जनेन उपलक्षणेन करणत्रयस्थानीयचवर्गटवर्गतवर्गसङ्कोचत्यागरूपाणां शषसानां हकारे निमज्जनमेवेति विभाव्यमित्यर्थः । तेषां यद्बहिः स्फुरणेन सि(शु)द्धविद्यादिस्वरूपविवेचनं तत् हकारनिमज्जने सत्येवेति वेदितव्यम् । ततश्चाभेदरूपं चित्पदमेकाङ्गमेव शषसानां हकारनिमज्जनेनादर्शने शुद्धविद्यास्वरूपं न विज्ञायते इति तद्विज्ञानाय हकारान्तर्गतानामेव तेषां बहिरवभासनमिति वेदितव्यम् । अथ विसर्गस्पन्दे चिद्बहिर्गर्भकुहरात्प्रकृत्यां विनिर्गतायाम् । करणत्रयेण सहेत्यध्याहार्यम् । बाह्यपदं पञ्चाङ्गकं भवति । चैत्यस्य चित्पदं विनास्वरूपासिद्धेस्तत्रालुप्तेन चित्पदेन सहेत्यर्थः ॥ ११ ॥

इदानीं शक्तिरूपस्य हकारस्य स्वरूपं विविच्य व्युत्पादयन्नेतदुत्तरपदस्य ळकारक्षकाररूपकूटाक्षरप्रतिपाद्यस्य शिवतत्त्वस्य

कूटाक्षरात्मतनुरेष वशिः सुषुप्ति-
विश्रान्तिरेव सविकल्पकलाल्पगन्धा ॥ १२ ॥
नास्त्यास्ति वेत्त्युदितसंशयजाग्रतीह
सुप्तौ.... शिवे (भवति) (जःग्र) जगदभेदरूपम्।

---

स्वरूपमवबोधयति—

ज्ञानेत्यादि। ज्ञानक्रियोन्मुखहकारमयाद्वयेच्छाविश्रान्तिः सदाशिवेश्वरात्मकयोर्ज्ञानक्रिययोर्विषये उन्मुखा। तदधिष्ठातृत्वादित्यर्थः। हकारमयाऽद्वयेच्छा हकारस्वरूपाभेदेच्छा। हकारप्रतिपाद्यत्वे हकारस्वरूपत्वादभेदेच्छायामाचरितम्। सैवेच्छाविश्रान्तिरूपत्वाद्विश्रान्तिः। अयमर्थः—येयमपरिच्छिन्नज्ञानक्रियात्मकसदाशिवे स्वरूपज्ञानक्रियाकरणाधिष्ठात्री ज्ञानक्रिययोः कूटस्थत्वलक्षणेन तदधिष्ठातृत्वेनेच्छाव्यपदेशविषया ज्ञानक्रियाकूटस्थत्वस्यैवेच्छालक्षणत्वादिच्छास्वरूपिणी शक्तितत्त्वमित्यागमिकैरुद्घोष्यमाणा द्वैतस्पृष्टिरहिताकारप्रतिपाद्या महाविश्रान्तिः। सैवान्तःपदे अबहिर्मुखविश्रमात्मा प्रपञ्चानभिमुखा विश्रान्तिरूपा। सविकल्पकलाल्पगन्धा। सुषुप्तिविश्रान्तिरेव स्वरूपानुभवमात्रविकल्पयुक्ता। सुषुप्तिरेव। कूटाक्षरात्मतनुः ळकारक्षकारोभयैक्यरूपकूटाक्षरात्मकनिजस्वरूपः। तत्प्रतिपाद्य इत्यर्थः। एष अपरोक्षानुभवगोचरः। शिवः शिवतत्त्वम्। भवतीति शेषः। जाग्रत्येव सम्भवन्ती सोमादिसाधनताभाग्यवशात् स्वतः प्रवृत्ता वा काचित्सुषुप्तिविश्रान्तिरन्तर्मुखी चेच्छिवतत्त्वं भवति, सैव बहिर्मुखीचेच्छक्तितत्त्वं भवतीति विवेकः॥ १२॥

अथान्तर्मुखजाग्रत्सुषुप्तिविश्रान्तिरूपस्य शिवस्य जडसुषुप्ति-

ज्ञानक्रियात्मकतया प्रतिरूपभिन्न-
मेवं चतुर्विध मधिश्रितबीजमात्रम् ॥ १३ ॥
ज्ञानं द्वयाद्वयमयं लसकाररूपं
तादृक् च कर्म कषकारमयं विदुस्तत् ।

---

विश्रान्तिरूपायाः स्वरप्रतिपाद्यायाः शक्तेरिव जगत्कारणत्वेन तत्त्वजगद्बीजस्थित्यौचित्यमिति तदवस्थानं कूटाक्षररूपेण विभाव्यमानं व्युत्पादयति—

नास्तीत्यादि । नास्त्यस्तिवेत्युदितसंशयजाग्रति नास्त्यस्तिवेत्युद्भूतसंशयः जाग्रत्यत्र हीह सुप्तौ अस्ति वा नास्ति वेति संशयगोचरेण निर्दोशितायां सुषुप्ताविस्यर्थः । शिवे तादृक्सुषुप्तिस्वरूपे शिवे । अभेदरूपमपि अथेत्येवं भिन्नम् एवं सम्भूय चतुर्विधं जगत् अधिश्रितबीजमात्रं बीजमात्रेणाधिश्रितं भवतीति शेषः । अयमर्थः । स्वप्नरूपेऽन्तःपदे भेदज्ञानरूपम् जाग्रद्रूपे बहिःपदे भेदक्रियारूपम्, तथैव स्वप्नरूपेऽन्तःपदे अभेदज्ञानरूपम्, जाग्रद्रूपे बहिःपदे भेदक्रियारूपमिति सङ्ग्रहेण जगच्चतुर्विधम् । तदेव शिवतत्त्वे कूटाक्षररूपेण बीजमात्रं तिष्ठतीति व्युत्पादितम् ॥ १३ ॥

इदानीं लकारसकारककारषकाररूपवर्णचतुष्टये कादिस्पर्शकूटाक्षरस्य चतुर्विधजगद्बीजसंसृष्टिरूपत्वं व्युत्पादयति—

ज्ञानमित्यादि । द्वयाद्वयमयं भेदाभेदात्मकं ज्ञानं लसकाररूपम्, भेदज्ञानम् । पदान्तस्तवर्गे प्रकृतिप्रतिपादको यो लकारस्तस्यैव तत्पदाधिष्ठातृत्वात्तत्पदस्य ज्ञानपदत्वात् ज्ञानप्रमातृत्वं मनःप्रतिपादकस्य लकारस्य तद्व्याप्यत्वाभिमानदोषान्न ज्ञातृतोपपत्तिः तन्मूलरूपस्य वकारस्य च तथा ज्ञेयस्थानीयस्य यकारस्य च

श्लिष्टं पुरः स्फुरितसद्वयकोटि ळ क्ष-
रूपं परस्परगतं च समं च कूटम् ॥ १४ ॥

---

ज्ञातृत्वं नाशङ्कनीयम् । ज्ञेयवर्गस्य गन्धादेः सर्वत्र पृथिव्याद्यङ्गत्वात् प्रकृत्याकारपृथिवीरूपस्य लकारस्यान्तःपदे क्रियाप्रमातृशङ्का न समुचिता । अतो लकारस्य ज्ञातृत्वं निश्चितम् । शवर्गपदे अभेदज्ञानत्वं सदाशिवात्मनः सकारस्य निर्विवादम् । तादृग्द्वयाद्वयमयं कर्म । च । कषकाररूपं ककारषकाररूपम् । भेदप्राक्रियापदे स्पर्शस्थले-टवर्गस्य कवर्गव्याप्यत्वाभिमानदोषान्नकर्तृत्वम् । अपि तु कवर्गाधिष्ठातुः ककारस्य अभेदक्रियापदे शवर्गे (ट)वर्गे ईश्वरात्मनष्टकारस्य कर्तृत्वं स्फुटम् । तदेतच्चतुष्कमिदम् । श्लिष्टं भेदज्ञानेन लकारेणाभेदज्ञानं सकारः । भेदक्रियया ककारेणाभेदक्रिया षकारः । भेदाभेदयोरन्योन्याश्लिष्टतास्वभावात् । श्लेषे च पुरः स्फुरितसद्वयकोटिप्रमायाबलादिति भावः । श्लिष्टयोरक्षरद्विकयोः सद्वयकोटिपुरःस्फुरणे कीदृग्रूपमित्यत आह—ळ क्षरूपमिति । लकारसकारयोः श्लेषभेदरूपस्य लकारस्य पुरःस्फुरणे ळ इति वर्णः स्यात् । ज्ञाने ज्ञानमेकरसीभवतीति । सकारस्य लकारे सामरस्यात्सकारयोगसम्भावितोच्छूनभावो लकारो ळ इति श्रूयते । ककारषकारयोः श्लेषे ककारस्य द्वैतरूपस्य पुरःस्फुरणे क्रियायां क्रिया न सामरस्यं लभत इति क्षकारः स्यात् । एतत्कूटं परस्परगतं क्रमात् परस्परेण व्याप्तम् । प्रथमं लकारेण सकारो व्याप्यते । एतत्संस्थानं भेदसंसारबीजम् । अनन्तरं सकारेण लकारः । आ? एतत्सं(स्था)नमभेदसंसारबीजम् । क्रियापदे च प्रथमं ककारेणषकारो व्याप्यते, अनन्तरं षकारेण ककारः । (एतत्)संस्थानकृतं भेदाभेद-

ज्ञानात्मजागरसुषुप्त्यवधी मकार-
कूटात्मकौ पशुशिवौ गुणकोणबिन्द्वोः।

———

बीजत्वं पूर्ववत्। समं च मध्यमपदे समव्याप्तिकत्वान्निष्पन्दम् सद्, भिदाभेदोभयविमिश्रेण बीजम्। भेदसंसारबीजभूतेन संस्थानेन दृश्यमानस्य कूटस्यैवं संस्थानप्रक्रिया गुरुमुखात्पारम्पर्यागतप्रतिभावद्भिरनुसन्धेया। शिवतत्त्वपुञ्जकस्य कूटस्यैकाक्षरत्वमेव व्यञ्जस्य शिवतत्त्वस्यैकत्वात्। सान्तादिमत्त्वव्यञ्जाया जातेः शिवस्थूलरूपकूटाक्षरव्यञ्जस्य शिवतत्त्वस्य न विश्रान्तिस्वरूपताभङ्ग इति वेदितव्यम्॥ १४॥

इदानीं मकारादिक्षकारान्तदशाक्षररूपस्य प्रमातृपदस्याष्टारत्रिकोणबिन्दुचक्रेषु सन्निवेशं व्युत्पादयति—

ज्ञानात्मेत्यादि। ज्ञानात्मजागरसुषुप्त्यवधीज्ञानात्मनोर्जागरस्य सुषुप्तेश्च अवधी। स्थानभूतौ। अवधिस्थाने तिष्ठन्तावित्यर्थः। ज्ञानजागरोऽन्तःस्थप्रतिपाद्यः स्वप्नः, तस्यावधौ यकारप्रान्ते स्वप्नस्य प्रवृत्तिः प्रथमपदस्य जाग्रदाभिमुख्येन प्रवर्तमानत्वाद्वकारमारभ्य यकारे परिसमाप्तिः, तदनन्तरपदत्वान्मकारस्य स्वप्नावधिस्थानत्वम्, ज्ञानसुषुप्तिः शकारवर्ग(र्ण)प्रतिपाद्यानिर्विभेदजाग्रत्स्वप्नरूपं पदद्वयं तस्यावधौ हकारोत्तरभागे क्षकारः निवृत्तिरूपा या ज्ञानसुषुप्तिः सुषुप्त्यभिमुखं प्रवर्तमानत्वाच्चकारमारभ्य हकारे परिसमाप्तिः तदनन्तरपदत्वात् क्षकारस्य ज्ञानसुप्त्यवधिस्थानत्वम्।

एवं ज्ञानजागरज्ञानसुषुप्त्यवधीमकारकूटात्मकौ मकारकूटाक्षरस्वरूपौ। पशुशिवौ। गुणकोणबिन्द्वोः त्रिकोणबिन्दुचक्रयोः

श्लिष्टौ वशादिचतुरस्रयुगान्वयोत्थ-
नागाश्ररश्म्युदरगौ ननु सर्गबिन्दू ॥ १९ ॥

श्लिष्टौ। त्रिकोणगर्भे बिन्दुः, बिन्दुगर्भे त्रिकोण इति जीवशिवयोरन्योन्यव्याप्तिस्वभावत्वाच्छ्लेषः। भेदस्त्रिगुणरूप इति त्रिगुणावच्छिन्नस्य भेदप्रमातुर्जीवस्य त्रिकोणरूपता अभेदस्त्वेकरूप इत्यभेदप्रमातुः शिवस्य निर्गुणत्वोपलक्षणनिष्कोणबिन्दुस्वरूपता।

ननु भेदप्रमातृत्वं प्रकृतेः पृथिव्या एवेति युज्यते तत्र भेदपदे जीवस्य प्रमेयत्वमिति प्राक्प्रतिपादितम्। तत्कथमत्र भेदप्रमातृत्वं जीवस्योच्यते अभेदप्रतिसिंहासनारोहश्चाप्यत्रैवोच्यत इति चेत् उच्यते। प्रमातृत्वस्य अनुसन्धातृत्वलक्षणत्वाच्चित्पद एव मुख्यवृत्त्योपपत्तिः, चैत्यपदेनुव्याप्तिमधिकृत्य गौणवृत्त्योपचार इति चैत्यप्रमातृत्वं जीवस्यैव, फलसमये अभेदपदीये व्यवहारे तु चैत्यस्यैवेति विवेकः। अतस्त्रिकोणबिन्द्वोः। श्लिष्टौ जीवशिवौ। वशादिचतुरस्रयुगान्वयोत्थनागाश्ररश्म्युदरगौ वकारादयः शकारादयश्च वर्णा वशादयः वशादिभिर्यच्चतुरश्रयुगम्। वादिभिर्यान्तैश्चतुर्भिर्वर्णैरेकं चतुरश्रम्, शादिभिर्हान्तैश्चतुर्भिर्वर्णैरन्यच्चतुरश्रम्। तयोश्चतुरश्रयोरन्वयः श्लेषः तेनोत्थमुद्भूतं यन्नागाश्रमष्टकोणं तदेव रश्मयः रश्मिचक्रम्। क्षकारात्मनः शिवस्य शादिवर्णनिष्पन्नचतुरस्रं रश्मिचक्रम्, मकारात्मनो जीवस्य वादिवर्णनिष्पन्नं चतुरश्रं रश्मिचक्रम्, तयोश्चक्रयोर्यथाक्रममन्तरगौ अधिष्ठातृत्वेन मध्यस्थितौ। सर्गबिन्दू। ननु। विसर्गबिन्दुस्वरूपौ ननु। त्रिकोणात्मनो जीवस्य विसर्गरूपता। बिन्दुचक्रात्मनः शिवस्य बिन्दुरूपतेति विवेकः ॥ १९ ॥

ज्ञानक्रियात्मकसुषुप्तिविबोधमध्य-
संस्थौ क्षमावुभयपक्षगबिन्दुसर्गौ ।

---

इदानीं क्षकारमकारात्मनोः शिवजीवयोर्ज्ञानक्रियासुषुप्त्यो-र्मध्यपदे ज्ञानक्रियाजागरयोर्मध्यपदे च यथाक्रमं सन्निवेशौचित्यं व्युत्पादयति—

ज्ञानक्रियेत्यादि । ज्ञानक्रियात्मकसुषुप्तिविबोधमध्यसंस्थौ । ज्ञानात्मिका सुषुप्तिरभेदजाग्रत्स्वप्नरूपा शवर्गप्रतिपाद्या, क्रियात्मिका भेदसुषुप्तिः स्वरेषु बिन्दुभागप्रतिपाद्या । तयोः सुषुप्त्योर्मध्ये क्षकारात्मनः शिवस्य संस्थानं ज्ञानात्मको विबोधो जागरोऽन्तःस्थप्रतिपाद्यो भेदस्वप्नः क्रियात्मको विबोधःस्पर्शप्रतिपाद्यो जागरः तयोर्मध्यभागे मकात्मनः जीवस्य सन्निवेशः । ज्ञानविभेदोभेदसुषुप्तेरप्युपलक्षणम् । अभेदजाग्रत्स्वप्नरूपायाः पूर्वकोटेरभेदसुषुप्तेरुदरकोटिमध्ये यदा शिवस्य सन्निवेशस्तदाभेदसषुप्तिज्ञानाविबोधात्मिकायाः पूर्वकोटेः क्रियाविबोधरूपाया उत्तरकोटिमध्ये जीवस्य सन्निवेश इति वेदितव्यम् ॥

एवं निरूपितसन्निवेशस्थानौ क्षकारमकारात्मकौ शिवजीवौ । उभयपक्षगविन्दुविसर्गौ ज्ञानक्रियासुषुप्तिलक्षणोभयपक्षगस्तद्व्यापकस्तदुभयाधिष्ठाता । बैन्दवः क्षकारः । भेदसुषुप्तिसहितज्ञानजागरकेवलक्रियाजागरलक्षणोभयपक्षव्यापकस्तदधिष्ठाता विसर्गो मकारः । एवं सुषुप्तिरूपोभयपक्षबैन्दवसुषुप्तिसहितजागररूपोभयपक्षव्यापकौ । अत एव तदाङ्गिभूतौ । निवृत्तिरूपाया द्विविधायाः सुषुप्तेः प्रवृत्तिरूपस्य भेदसुषुप्तिसहितस्य द्विविधस्य जागरस्याधिष्ठातृत्वसूचकेन मध्यसन्निवेशेन निवृत्तिप्रवृत्तिरूपयोः अभेदपदयोरङ्गिभूतौ

सव्यापकौ तदुभयस्य तदङ्गिभूतौ
जाग्रत्सुषुप्तिसमवायपदेऽनुषक्तौ ॥ १६ ॥
सङ्कोचपूर्तिपरसीमपदोभयार्था
श्रीचक्रमध्यनिलया त्रिपुरेश्वरी सा।



जाग्रत्स्वप्नसुषुप्ती समवायपदे जाग्रत्सुषुप्त्योर्यः समवायो मिश्रणं तत्पदे अन्तःस्थोष्मवर्गयोः खलु जाग्रत्सुषुप्त्योः समस्तयो र्न तु व्यस्तयोः समवायः। अन्तःस्थपदे च जाग्रत्सुषुप्त्योः समवायई-षत्स्पृष्टताविषयत्वात्, ऊष्मपदे च जाग्रत्सुषुप्त्योः समवायः त-च्छ्लेषाद्विवृतताविषयत्वात्। अतो व्यापकवर्गौ दशाक्षररूपस्व-रस्पर्शदशायोर्व्यापिकाः। अत एव तस्य व्यापकवर्गसंज्ञा। तत्र म-ध्यपदे पक्षद्वयव्यापकयोः शिवजीवयोः मध्यपदोचितयोः सन्नि-वेशः सोपपत्तिक इति विवेकः॥ १६ ॥

इदानीं दशारयुग्मचतुर्दशारव्यापकस्य अष्टारात्मनो मध्य चक्रस्य अधिष्ठातृत्वेन जीवशिवात्मकमकारक्षकारसामरस्यमेव सर्वचक्राधिष्ठातृभूताया मध्यचक्रनिलयायास्त्रिपुरेश्वर्याः स्वरूप-मिति व्युत्पादयति--

सङ्कोचेत्यादि। सङ्कोचपूर्तिपरसीमपदोभयार्था सङ्कोचस्य सङ्कोचभावस्य पूर्तेः पूर्णभावस्य इयत्परसीम परं परमावधि-स्थानम्, जाग्रदात्मकदशारयुग्मरूपं सुषुप्त्यात्मकं चतुर्दशाररूपं च तदुभयोभयार्धा(र्था)। श्रीचक्रमध्यनिलया प्रमेयप्रमाणप्रमातृलक्ष-णपुरत्रयात्मनः श्रीचक्रस्य मध्यं स्वप्नात्मकमष्टाररूपं प्रमातृपुरम्, तदेव निलयः सन्निवेशस्थानं यस्याः सा। त्रिपुरेश्वरी। अनेन मकारक्षकारयोरष्टाराधिष्ठातृत्वादुभयसामरस्यमेव त्रिपुरेश्वरी-

त्रेधा विसर्गपदमेकविधं पदं च
बिन्दोस्तुरीयमिति बाहुचतुष्टयाढ्या ॥ १७ ॥
सौषुप्तजाग्रदबहिः पदजागरेषु
तोयक्ष्मानिलमयेष्व क लात्मशक्त्या ।

---

स्वरूपमिति प्रतिबोधितः ।

अथ त्रिपुरेश्वर्याः सुषुप्तिस्वप्नजागरतुर्यलक्षणसकलचक्रार्थस्वरूपिण्या दशाचतुष्टयमेवाङ्गचतुष्टयमिति तद्विभागमाह–त्रेधेत्यादि । त्रिधा त्रिविधं विसर्गपदं भेदपदम् , भेदस्तु सुषुप्तिभेद, स्वप्नभेद, जागररूपम् , बिन्दोरेकविधं पदं तुर्यरूपम् । अत्र च यद्यपि अभेदजाग्रत्स्वप्नसुषाप्तिरूपेणत्रैविध्यं सम्भवति । तथापि तस्य त्रैविध्यस्य भेदप्रतियोगित्वोपाधिवशात् स्फुरत्ता न तु पारमार्थ्येनेति तुर्यस्याभेदपदस्यैकविध्यमेवेति । बाहुचतुष्टयाढ्या इत्युक्तदशाचतुष्टयोपलक्षणेन बाहुचष्टयेन आढ्यायाः सम्पन्नायाः त्रिपुरेश्वर्याः साम्प्रदायिको योऽयं बाहुचतुष्टयसङ्केतः सोऽयं दशाचतुष्टयाङ्गत्वोपलक्षणं न तु पारमार्थिक इति सद्गुरुकटाक्षक्षायितसर्वसंशयस्य भाग्यवतो जीवनस्य एकवेद्यं महारहस्यमिति साम्प्रदायिकप्रवादः ॥ १७ ॥

तथैवमेव बाहुचतुष्टयसङ्केतमायुधचतुष्टयसङ्केतेन सह प्रस्फुटं व्युत्पादयति––

सौषुप्तेत्यादि । सौषुप्तं सुषुप्तिः । जाग्रज्जागरः । अबहिः पदजागरस्वप्नः। सुषुप्तिजाग्रत्स्वप्नेषु । तोयक्ष्माऽनिलमयेषु जलपृथ्वीवायुरूपेषु । सुषुप्तिर्जडत्वात् जलरूपा, जाग्रत्–संङ्कोचरूपत्वेन कठिनत्वात्पृथिवीरूपम् , स्वप्नो वायुपर्यायमनोविलासत्वाद्वायुरूपः । क्रमे-

आत्तेचवर्गयमयस्वगुणेक्षुचाप-
पुष्पेषुपाशनिगृहीतचिता त्रिबाहुः ॥ १८ ॥
तुर्येऽग्निधाम्नि हचिता सस्रुणिप्रणुन्न-



णेतास्तु दशासु। अ क लात्मशक्त्या अकारककारलकाररूपया श-
क्त्या। चैत्यात्मिकया पृथ्वीरूपयेति भावः। पृथिव्या एवात्यन्तकठि-
नस्वरूपायाः परमचैत्यत्वात्। किंविधया शक्त्या। आत्तेचवर्गयम-
यस्वगुणेक्षुचापपुष्पेषुपाशनिगृहीतचिता सुषुप्तिजाग्रत्स्वप्नेषु क्र-
मेण आत्तैः परिगृहीतैः इकारचवर्गयकारमयैः स्वगुणैः स्वकी-
यधर्मैः भूतपञ्चकाधिष्ठातृभूतायाः पृथिव्याः शब्दादिपञ्चकं खलु
धर्मरूपम्, नियमेन तदाश्रितत्वात्, एतैरेव शब्दादिभिः सु-
प्त्यादिदशात्रये प्राप्तौल्बण्यतारतम्यमयैः। अत एव सुषुप्तावि-
क्षुचापमिति सङ्केतितैः। जलमयत्वेन मधुरत्वाच्च, जीवस्वरूपावर्ज-
कत्वाच्च। जाग्रति प्रवृद्धभेदैः प्रस्फुटपञ्चरूपैः वशीकरणमात्रव्या-
पारवत्तया कुसुमबाणा इति सङ्केतितैः। स्वप्ने किञ्चिदुच्छूनदशा-
यां वायुरूपत्वाद्वात्यावद्भ्रामणव्यापारेण भेदाभेदभ्रान्तिजननेन
पाश इति सङ्केतितैः। एवं इकारचवर्गयकारमयैः प्रतिपाद्याः श-
ब्दादय एव इक्षुचापपुष्पबाणपाशत्वेन सङ्केतिताः, तैरेवंभूतैः
साधनैर्निगृहीता बद्धा आवृता चित् जीवस्वरूपिणी चितिर्यया
तया पृथिव्या शक्त्या। त्रिबाहुः बाहुत्रयवती। एवं चैत्यात्मिकया
शक्त्यैव सुप्त्यादिदशात्रयाधिष्ठात्री त्रिपुरेश्वर्या बाहुत्रयम्। तदा-
श्रितं शब्दादिपञ्चकमेव तत्तद्दशाव्यवस्थितस्वरूपविशेषं सत्
इक्षुचापाद्यायुधत्रयमिति महोपदेशः॥ १८॥

एवं बन्धकं बाहुत्रयं तदायुधत्रयसहितं व्युत्पाद्य मोचकं

चैत्यातिपाशिवभजडत्वरुजैकबाहुः ।
एवं चतुर्भुजविभाव्यचतुर्दशाङ्गा
क्ष्मात्माङ्गिनी जयति मध्यपदेऽपि तुर्या ॥ १९ ॥

---

चतुर्थं बाहुं तदायुधेन सह व्युपादयति ।

तुर्य इत्यादि। अग्निधाम्नि अग्निस्वरूपे । चिद्व्याप्तिस्थानत्वादिति भावः । तुर्ये चतुर्दशायाम् पारिशेष्यात्तुर्यमिति । तमा(दा)काशस्वरूपमिति वेदितव्यम् । हचिता । हकारप्रतिपाद्यया चिता । सस्तृणीत्यादिसकाररूपेण सृणिना अङ्कुशेन प्रणुन्नः—चैत्यमेवातिपशुर्महापशुः, अत एव महापशुत्वा दिभो गजः, तस्य जडत्वम्, चिद्व्यतिरेकेण स्फुरणं तदेव रुक् रोगः यया तयेति हचिद्विशेषणमेतत् । (यथा)महापशुर्गजः खल्वङ्कुशेन बोध्यते चैत्यमपि तथा सकाररूपेण सदाशिवविमर्शेन बोध्यते । चिदेकरूपतां प्राप्यत, इति सकारस्याङ्कुशसङ्केतोपपत्तिः । अभेदविमर्शः सकारो हकारात्मिकायाः संविभक्त्या अङ्गत्वाद्धर्म इति तदायुधत्वं तस्य, एवं सकाराङ्कुशभृता हसाकारशक्त्या । एकबाहुः एकबाहुमती । एवं चतुर्भुजं विभाव्य । चतुर्दशाङ्गा । चतुर्भुजे विभाव्यानि चतस्रो दशा एवाऽङ्गानि यस्याः सा क्ष्मात्माङ्गिनी । क्षकारमकारसंसृष्टिरूपा अङ्गिनी। क्षकारमकाराभ्यामेव दशाचतुष्टयमधिष्ठितमिति । तदुभयसंसृष्टिरङ्गित्वं त्रिपुरेश्वर्याः प्रमाणस्वरूपतेति सम्यगुपपत्तिः । निर्विकल्पपदस्य तुरीयस्य माध्यमिकत्वेनाधिष्ठातृतया क्षकारो बीजभूतः । विकल्पपदस्य सुषुप्त्यादिदशात्रयात्मनो माध्यमिकत्वेन मकारो बीजभूतः । तदुभयसंसृष्टिरेव सर्वमूलत्वात्तुर्यातीतस्वभाव इति समुपादिशति-मध्यपदे तुर्येति । एतस्यैव पदस्य सर्वोत्कृष्टता ज-

सुप्तिप्रभृत्युदितचैत्यविजृम्भितस्य
जाग्रत्पदप्रभृतिचिद्धिनिमज्जनं यत्।

---

यतीति शब्देनोन्मीलिता ॥ १९ ॥

ननु पञ्चभूतानि पञ्चाम्नाया देवस्य पञ्चमुखानीति दशाभिरपिपञ्चभिर्भवितव्यम्। सुषुप्त्यादिभिः पञ्चभिर्दशाभिरङ्गैरुपलक्षितस्तत्सर्वमयादितदन्यो भवितुमर्हति। तत्कथं तुर्यातीतस्याङ्गित्वमुक्तमित्यत्राह—

सुप्तिप्रभृतीति। सुप्तिदशामारभ्य। उदितस्य चैत्यविजृम्भितस्य। जाग्रत्पदप्रभृति जाग्रत्पदमारभ्य यच्चिद्धिनिमज्जनं चिन्मयतावभासः। तत्खलु तुर्यं पदम्। सुषुप्तिस्वप्नजाग्रत्क्रमेणोन्मीलितस्य भेदावभासस्य जाग्रत्स्वप्नसुषुप्तिक्रमेण योऽयमभेदावभासः तत्खल्वभेदावभासस्थानं तुर्यदशा। तस्यां दशायां यश्चिन्मयसुषुप्तिभागः जाग्रत्स्वप्नयोश्चिन्मयावभासनानन्तरं सम्भाव्यमानाश्चिन्मयीभूतसुषुप्तिरूपो विश्रमः। असौ खल्वतीततुर्यं तुर्यातीतस्वभावम्। शिववपुः शिवस्य शिरोरूपं वपुः। चिन्मयौ जाग्रत्स्वप्नौ शिवस्य जघन्यं वपुः, चिन्मयीसुषुप्तिस्तस्य शिरःपदमिति वेदितव्यमिति भावः। एतदुक्तं भवति। येषां चतस्र एव दशा इति मतम्, चिन्मयसुषुप्तिरतीततुर्यमत्युत्तीर्णतुरीयमिति व्यपदेशाङ्गीकारेण तुर्य एवान्तर्भावः। तेषां तुर्यातीतं नाम नान्यापृथग्दशा, चिन्मयसुषुप्तेस्तुर्यातीतत्वसम्भावनाविषयस्य तुर्य एवान्तर्भावात्। अतस्तुर्यातीतस्वभावः सर्वदशासमवायरूपो न दशामात्रः किं तु सर्वदशाधिष्ठाता। एतन्मतानुसारेण क्षकारमकारः समवायः सर्वदशाधिष्ठातृभूतस्य तुर्यातीतस्वभावत्वमाङ्गित्वाभिप्रायेणोक्तम्,

तुर्यं पदं च खलु तत्र सुषुप्तिभागो
यस्मिन्मयः शिववपुस्तदतीव तुर्यम् ॥ २० ॥
तुर्यं द्विखण्ड मभवस्य जघन्यभागो
मूर्धाऽतितुर्यमनयोरनुभूः क्षमध्यम् ।

---

दशामात्रपरत्वे नेति पूर्वसूत्राभिप्रायः ।

नन्वेवं चाङ्गिपरत्वेनाभिमतस्य तुर्यातीतस्वभावस्य सर्वदशाङ्गसमवाय एव युक्तः स त्वेकदेशनियतक्षकारमकारसंश्लिष्टिसन्निवेशौचित्यमिति न मन्तव्यम् । यथा शरीरेण सर्वशरीरसमवायतोऽपि शरीरैकदेशे हृदयकमले सन्निवेशाङ्गीकारस्तथा सर्वदशासमवायवत एव तुर्यातीते (त) स्वभावस्य क्षकारमकारसंश्लिष्टिरूपमध्यचक्रसन्निवेशो युज्यत एवेति निरवद्यम् । येषां पुनर्मते तुर्यातीतं चिन्मयसुषुप्तिपरम् पञ्चमी दशैव तेषां मते क्षकारमकारसंश्लिष्टिरूपं पदं सर्वदशासमवेतं महातत्त्वमेव त्रिपुरेश्वरीप्राणपर्यायमिति व्यत्ययप्रयोगः ॥ २० ॥

अतीततुर्यं शिववपुरिति पूर्वसूत्रे सामान्योक्तं विशेषेण व्युत्पादयति—

तुर्यमित्यादि । द्विखण्डं खण्डद्वयोपलक्षितम् । अभेदजाग्रत्स्वप्नरूपमिति भावः । तुर्यम् । अभवस्य शिवस्य । जघन्यभागः । अतितुर्यम् । अभेदसुषुप्तिरूपं तुर्यं तुर्यदशाभागः । मूर्धा शिरः । अभवस्येति सम्बध्यते । शिवस्य निर्विकल्पप्रधानत्वाद्विकल्पाप्राधान्याच्चेति भावः । अनयोरप्रधानप्रधानाङ्गयोः । क्षमध्यं क्षकाररूपं मध्यम् । अनुभूः प्राणस्थानम् । जघन्यशिरोरूपयोरङ्गयोर्मध्यस्थाने कण्ठे खलु प्राणस्थितिरिति भावः । उभयाधिष्ठातुरुभयमध्यास्थितिरुपपन्ने-

जाग्रच्छिराःस्वपनसुप्तिजघन्यभागो
मप्राणकः पशुरसौ विपरीतबोधः ॥ २१ ॥
मात्मा पशुः प्रकृतिरेव तया निगीर्णो
हात्मापि चित्प्रकृतिरेव निवृत्तिरूपा ।

---

ति तात्पर्यम् । शिवप्रसङ्गेन जीवस्याप्यङ्गविवेकमाह—जाग्रच्छिरो यस्य जाग्रच्छिराः । स्वपनसुप्तिजघन्यभागः स्वपनं स्वप्नः । स्वपनघुसुप्तिर्जघन्यभागो यस्य असौ । विपरीतबोधः शिवाद्विपरीतज्ञानः । पशुः । विकल्पप्राधान्यान्निर्विकल्पाप्राधान्याच्च पशोः शिवाद्वैपरीत्यम् । एवंविधः । पशुः मप्राणकः । उभयाङ्गमध्यवर्ती यो मकारः स एव पशोःप्राणस्थानमिति पूर्ववद्विवेकः ॥ २१ ॥

भेदसंसारप्रवर्तिन्या प्रकृत्या यथा मकाररूपः पशुर्बद्धः, अभेदसंसारप्रवर्तिन्या प्रकृत्या तथा क्षकाररूपस्यापि शिवस्य बन्धः सम्भाव्यते । तत्कथं नियतबन्धं मकारक्षकारसामरस्यमुपास्यत्वेनाङ्गीकृतमित्यत्राह—

मात्मेति । मात्मा मकारस्वरूपः । पशुर्जीवः प्रकृतिरेव । तत्रहेतुमाह । तया निगीर्ण इति । प्रकृत्या ग्रस्तत्वात् । प्रकृत्युत्तीर्णस्तदुतीर्ण इति भावः । हात्मापि चित् । हकाररूपिणी चित् । निवृत्तिरूपा प्रकृतिरेव । तदनुषङ्गनैयत्यादित्यभिप्रायः । क्षकारस्तु इत्थं द्विधा प्रकृतिविश्रमभूः । इत्थमुक्तमर्यादया । द्विधा । द्विरूपिण्याः प्रवृत्तिनिवृत्तिरूपिण्याः । प्रकृतेर्विश्रमस्थानभूः—विश्रमस्थानम् । शुद्धान्तर्मुखत्वेन संसारद्वयकलास्पृष्टत्वात् प्रकृत्यनावृतः किन्तु प्रकृतेः स्वयमावरकमित्यभिप्रायः । अत एव । क्षकारः । परः शम्भुः । प्रकृत्याः परत एव । न तु तदन्तः पतितः । अतो नि-

इत्थं द्विधा प्रकृतिविभ्रमभूः क्षकारः
शम्भुः परः परत एव भवेत्प्रकृत्याः ॥ २२ ॥
यद्वा शिवः क्ष इह म प्रतियोगिभावात्
सौषुप्तमेव परशम्भुपदं चिदात्मा ।

---

त्ययुक्तः क्षकारः । अस्यैव यद्बहीरूपं हकारः यच्चात्यन्तर्बहीरूपं मकारः तयोरेव प्रकृतिपारतन्त्र्येण प्रकृतित्वं न तु क्षकारस्य अतस्तस्योपास्यत्वं युज्यत एवेति तात्पर्यम् ॥ २२ ॥

क्षकारस्य मकारप्रतियोगितया विकल्पगन्धो दुर्निवारः अशुद्धनिर्विकल्पं चित्सुषुप्तिपदमेव परम तत्त्वम् । तदेवोपास्यमिति ये मन्यन्ते तदाक्षेपायाह--

यद्वेति । मप्रतियोगिभावात् मकारस्य जीवप्रतिपादकस्य प्रतियोगिभावात् अन्योन्यव्याप्यव्यापकभावसंसर्गात् । क्षकारः । शिवः । न तु परमशिवः । विकल्पगन्धनैयत्यादिति भावः । चिदात्मा चिन्मयं सौषुप्तपदं सुषुप्तिरेव । परशम्भुपदं परमशिवतत्त्वम् । यद्वा । यद्वेति पक्षान्तरे । अस्मिन् पक्षे चित्सुषुप्तावपि विकल्पात्यन्तोच्छेदो दुष्प्रतिपादः । साधिते विकल्पात्यन्तोच्छेदे पर्यन्ततो जडत्वं प्रसज्येत । जडस्य च नोपास्यत्वम् । अतो विकल्पपदे वा गन्धपदे वा तत्त्वमुपास्यमिति क्षकारस्य चक्रमध्यस्थित्या विभाव्येन चक्राधिष्ठातृत्वेनोपास्यत्वं स्फुटीभूतमिति समाधत्ते--यच्चक्रमध्यपदतेत्यादि । क्षकारस्य शम्भोश्चक्रमध्यपदता साम्प्रदायिकी चक्रस्य मध्यप्रतिष्ठा, तत्प्रतिबोधिता तदधीशता चक्राधीशता च तदेतदस्य शम्भोर्गुणगन्धितया हेतुना सिद्धिरेते (सिद्ध्यति) अर्च्यभावात् अर्चनीयत्वात् । उपपाद्यत इति शेषः । गुणगन्धाधानेनाऽर्चनीयो

यच्चक्रमध्यपदता तदधीशता च
शम्भोः(स्तदस्य) सदेश्यगुणगन्धितयार्च्यभावात्॥२३॥
चन्द्राग्निभुक्छशिभुगग्निरथः समस्तं
भानुः पदे पद इदं त्रितयं स्वरादौ ।

---

न तु निर्गुण इति प्रतिपत्तिरेव क्षकारस्य शम्भोश्चक्रमध्यस्थितिः साम्प्रदायिकीति समर्थयतीति विवेकः ॥ २३ ॥

अथ पुनः पुनरावर्तमानाभिर्दशाभिरेव तिथिभिः कालो व्यवस्थाप्यते । तिथयश्च शुक्लपक्षे पञ्चदश कृष्णपक्षे च तावत्यः सम्भूय त्रिंशत्संङ्ख्यकाः पुनः पुनरावर्तन्ते । योगिदृष्टौ दशानामेव तिथिरूपतायां तिथिसमानसङ्ख्यता दशानां साम्प्रदायिकोपदेशगम्येति तदेव प्रमेयमुपदिशति--

चन्द्रोऽग्निभुगित्यादि । सूत्रद्वयेन दशायां दशायां तथा तथारूपः संसारः पञ्चभूतात्मनैव कलापेन सम्पद्यते । तान्यपि भूतानि दशास्वभावान्येव । तथा हि । जलतत्त्वात्मकश्चन्द्रः सुषुप्तिरूपः । वायुतत्त्वात्मकः सूर्यो जाग्रद्रूपः । तेजस्तत्त्वात्मको वह्निस्वरूपः । पृथ्वीतत्त्वात्मिका प्रकृतिर्गुणत्रयपर्यायतेजस्त्रयबीजभूता । तुर्यम् आकाशतत्त्वात्मकः पुमान् सकलप्रपञ्चबीजरूपिण्याः प्रकृतेः विश्रान्तिस्थानम् तुर्यातीतम्। यद्यपि सुप्त्यादौ कलानां बाहुल्यं विद्यते । तथापि ताः कलाः पञ्चस्वेवतत्त्वेष्वन्तभवन्ति । इति प्रतिदशं पञ्चैवाङ्गदशाः । सुषुप्तिसुषुप्तिर्जलम्, सुषुप्तिजाग्रद्वायुः, सुषुप्तिस्वप्नो वह्निः, सुषुप्तितुर्यं पृथिवी, सुषुप्तितुर्यातीतमाकाशः । इत्येवं जाग्रदादावप्यङ्गदशापञ्चकविभागोऽवगन्तव्यः । एवं प्रवृत्तिरूपासु सुषुप्तिजाग्रत्स्वप्नेषु प्रतिदशं पञ्चाङ्गदशागणनायां प्रवृ-

खण्डत्रयात्मकमखण्डपदं च तद्वत्
तद्विश्रमः प्रतिदशं समसङ्ख्यतैषाम् ॥ २४ ॥

---

त्तिरूपसंसारः पञ्चदशाङ्गवान्भवति। तान्येवाङ्गानि शुक्लपक्ष(स्य)योः पञ्चदशतिथय इति विवेकः। अथ निवृत्तिसंसारे प्रवृत्तिसंसाराङ्गानां सर्वेषां निवृत्तिरूपतेति तत्र कृष्णपक्ष(स्य)योस्तिथयः पञ्चदश भवन्ति। प्रवृत्तिसंसारे वेद्यमयस्य चन्द्रस्याभिवृद्धिरिति तत्संसार(क)स्य शुक्लपक्षता। निवृत्तिसंसारे वेद्यस्य चन्द्रस्य क्षय इति कृष्णपक्षता तस्येति विवेकः। सूत्रयोरक्षरार्थस्तु अग्निभुगाग्निव्यापकश्चन्द्रः। शशिभुक् चन्द्रव्यापकोऽग्निः। एवं चन्द्राग्न्योःस्वभावोऽग्निः। न तु सर्वासु दशास्वग्निना चन्द्रकवलनं चन्द्रेणाग्निकवलनं विवक्षितम्, तथात्वे प्रवृत्तिसुषुप्त्यादौ अग्निना चन्द्रकबलने शुक्लपक्षत्व(व्या)हानिरिति। अथ। समता। अनयोश्चन्द्राग्न्योः समता। भानुः। स्वरादौ स्वरवर्गादौ पदे पद इदं त्रितयम्। संसारकलापत्वेन नियताभ्युपेयमिति शेषः। तद्वच्चन्द्रादिवत्। खण्डत्रयात्मकं चन्द्राग्निभानुरूपखण्डत्रयात्मकम्। चन्द्राद्याकारेण त्रिलसनम्। अखण्डपदं प्रवृत्तिपर्यायपृथिवीरूपम्। चन्द्रादयः खलु गुणत्रयमयाः प्रवृत्तिपर्यायपृथिवीविलासरूपा इति विवेकः। अखण्डपदं गुणत्रयसमष्टिरूपत्वात्प्रकृतेरखण्डपदत्वम्। एतच्च पदं पदे चन्द्रादिपदवच्च संस्थानमिति एतद्वच्छब्दार्थः। तद्विश्रमश्च तस्य प्रकृतिरूपपदस्य विश्रमः विश्रान्तिस्थानम्। आकाशरूपम्। स्वात्मतत्त्वमित्यर्थः। एतदपि पदं प्रतिदशं नियतमिति अङ्गदशापञ्चकनैयत्यदशानामुक्तम्। एषामङ्गानां दशासु नियतानां तिथिभिः समसङ्ख्यता वेदितव्येति शेषः॥ २४ ॥

भेदाविभेदसमतातनुभिः सुषुप्ति-
स्वप्नप्रजागरपदैस्त्रिगुणीकृताभिः ।
पृथ्व्यादिखान्ततिथिभिर्ननु शुक्लपक्षः
कृष्णस्तुजागरपदादिकतन्निवृत्त्या ॥ २९ ॥
देहात्मिका प्रकृतिरेव परा विमर्शः
सैव प्रवृत्तिविनिवृत्त्युभयादिभूता ।

---

भेदेत्यादि । भेदाविभेदसमतातनुभिः । क्रमेण भेदाभेदतदुभयसाम्यस्वरूपैः सुषुप्तिस्वप्नजागरपदैः । त्रिगुणीकृताभिः । पृथिव्यादिखान्ततिथिभिः पृथिव्याद्याकाशान्ताङ्कदशारूपाभिः । पञ्चभिस्तिथिभिः । त्रिगणनायां पञ्चदशभिः । शुक्लपक्षो ननु । भवतीति । शेषः । जागरपदादिकतान्निवृत्त्या । अथ तुर्यदशायां जाग्रदादिप्रथममन्त्यात्तुनिवृत्तिरासां तिथीनां निवृत्त्या निवृत्तिरूपाङ्गीकारेण । कृष्णः पक्षः । तु शब्दो भेदे । एवं सिद्धसाम्प्रदायिककालविवेकयोगे दृष्टदृष्टेः पुरुषस्य कालपञ्चकत्वं सिध्यतीति एतत्प्रमेयोपदेशः ॥ २९ ॥

इदानीं महाप्रकृतिरूपपरात्मिकाया विमर्शशक्तेर्दशाविशेषरूपाणामङ्गानां नवसङ्ख्याकत्वेन तस्याः प्रतिबिम्बरूपं श्रीचक्रमपि नवचक्रमयरूपमिति व्युत्पादयन्नाह--

देहात्मिकेत्यादि । देहात्मिका देहरूपिणी अनेन त्रिपुरेश्वर्याः शरीरत्रयमेव मुख्यं रूपमिति व्युत्पादितम् । प्रकृतिरेव परावाग्रूपिणी स्वरसग्रहणलक्षणा । एवम् प्रकृतिरिति परावागिति । व्यवस्थिताविमर्शः शक्तिः शिवप्रवृत्तिनिवृत्त्युभयादिभूताः प्रवृत्तिसंसारस्य निवृत्तिसंसारस्य मिश्रसंसारस्य च कारणभूतः सर्वोऽपि

वागर्थमिश्रवपुरिन्दुनलार्यमत्र
त्र्येकैक युक्तित्रपुटिका नवमूर्तिरेका ॥ २६ ॥
चैतन्यता च जडता च विमर्शचित्यो-
स्तुल्या यदिन्दुनलयोरुभयं तदिच्छा ।

---

संसारः प्रकृतिमूलः प्रकृतिरेव विलासरूपत्वादित्यर्थः । वागर्थमिश्रवपुः न तु केवलं परावाग्रूपत्वाच्छब्दरूपा अपि त्वर्थरूपा च मिश्ररूपा च सर्वव्यापिवस्तुनः शब्दमूलत्वाच्छब्देऽन्तर्भावात् एवं रूपता त्रिपुरेश्वरी । इन्दुनलार्यमादित्र्येकैकयुक्तित्रपुटिका त्रिपुटिकाप्रमेयप्रमाणप्रमातृसमुदायलक्षणा इन्दुनलार्यम्णां त्रयाणां एकैकयुक् एकैकं प्रत्येकं युज्यते इत्येकैकयुक् । एवं प्रत्येकं प्रवृत्तिरूपेण चन्द्रेण निवृत्तिरूपेणानलेन उभयसाम्यरूपेणार्यम्णा सूर्येण युक्ता या त्रिपुटी प्रमेयादिपुरत्रयी तत्स्वरूपा सती तत्त्वत एकरूपापि विश्रान्तिदशायामद्वितीयापि नवमूर्त्तिः नवसङ्ख्याकस्वरूपभेदा । अयमर्थः । जडत्वात्प्रमेयरूपं चतुर्दशारात्मकं सुषुप्तिपुरं विसर्गप्राधान्यादुभयप्राधान्याच्च त्रिधा भिद्यते । प्रमाणरूपं दशारद्वयात्मकं जाग्रत्पुरमपि तथा, प्रमातृरूपम् अष्टारात्मकं स्वप्नपुरमपि तथेति नवचक्रविवेकः । एतच्चक्रं तत्तद्दशारूपेण नवधाविलासं स्यात्सा त्रिपुरेश्वर्या बिम्बं भवतीति हृद्गताभिप्रायः ॥ २६ ॥

एवं शिवस्य सगुणस्वरूपं प्रकृतिमेवोत्कृष्य उपास्यत्वसम्भावनया नवचक्रेश्वरीं व्युत्पाद्य तस्याश्चैत्यत्वे प्रसिद्धे सम्भावितमुपास्यत्वव्याहतिशङ्काकरण्डत्वं (कारणत्व) प्रवादमपवदन्नाह—

चैतन्यतेत्यादि । भीतिरजडेति सम्प्रत्ययः विमर्शस्य चि-

